वे.प
टी.दी
१३

नन्वेवं लौकिकोदाहरणसंभवेऽपि वैदिकं न संभवति विज्ञातारमरे केन विजानीयादित्यादिश्रुत्या प्रमातुर्विषयत्वनिषेधात्तत्पदार्थाभिन्नत्वंपदार्थप्रमातृचैतन्यस्य विषयावच्छिन्नचैतन्यत्वाभावान्निरुक्तप्रयोजकस्यासत्त्वादित्याशंक्याह एवमिति तत्त्वमसीत्यादिवाक्यजन्यज्ञानस्यापि सन्निकृष्टत्वंपदलक्ष्यविषयत्वयोक्तवाक्यजन्यांतःकरणवृत्त्यभ्युपगमेन लक्ष्यचैतन्यस्य वृत्त्यवच्छिन्नचैतन्यस्याभेदेन प्रत्यक्षत्वमित्यर्थः तत्र तस्मिन्ज्ञाने प्रमातृपदेन लक्ष्यं ग्राह्यं त्वंपदलक्ष्यात्तत्पदलक्ष्यस्याभिन्नत्वादेवमुक्तं श्रुतिस्तु फलव्याप्यत्वनिषेधपरा ननु सोऽयं देवदत्त इत्यादिवाक्यजन्यज्ञाने संसर्गावगाहिवाक्यजन्यज्ञानत्वाद्गामानयेति वाक्यजन्यज्ञानवदुक्तवाक्यजन्यज्ञानेन निर्विकल्पकं संसर्गावगाहित्वात् इत्याशयेन शंकते नन्विति भेदेवं यदि वाक्यजन्यज्ञानविषयत्वं पदार्थसंस

एवं तत्त्वमसीत्यादिवाक्यजन्यज्ञानस्यापि तत्र प्रमातुरेव विषयतया तदुभयाभेदस्य सत्त्वात्। ननु वाक्यजन्यज्ञानस्य पदार्थसंसर्गावगाहितया कथं निर्विकल्पकत्वम्। उच्यते। वाक्यजन्यज्ञानविषयत्वे हि न पदार्थसंसर्गत्वं तन्त्रम् अनभिमतसंसर्गस्यापि वाक्यजन्यज्ञानविषयत्वापत्तेः। किन्तु तात्पर्यविषयत्वं। प्रकृते च सदेव सोम्येदमग्र आसीदित्युपक्रम्य तत्त्वमसि श्वेतकेतो इत्युपसंहारेण विशुद्धे ब्रह्मणि वेदान्तानां तात्पर्यमवसितमिति कथं तात्पर्याविषयसंसर्गमवबोधयेत्। इदमेव तत्त्वमस्यादिवाक्यानामखण्डार्थत्वं यत्संसर्गानवगाहियथार्थज्ञानजनकत्वमिति

र्गत्वं तन्त्रं भवेन्न तु तथा तथात्वे हि भोजनप्रकरणे सैंधवमानयेत्यत्रानभिमताश्वादिसंसर्गस्यापि तत्त्वापत्तेरित्याशयेनाह उच्यत इति। ननु पदार्थसंसर्गत्वस्य तन्त्रत्वाभावे किं तत्र तन्त्रमिति पृच्छति यस्तात्पर्यविषयः स एव वाक्यजन्यज्ञानगोचरः स च संसर्गो संसर्गो वेति विशेषो नादर्तव्य इत्याह तात्पर्येति। प्रकृते तु पिंडमात्रे लौकिकवाक्यस्येवोपक्रमोपसंहारादितात्पर्यलिंगैस्तत्त्वमस्यादिवेदान्तवाक्यानामद्वितीये विशुद्धे ब्रह्मणि तात्पर्यावधारणादसंसर्गस्यैव तात्पर्यगोचरत्वात्सोऽयमित्यादिवाक्यानां तात्पर्याविषयसंसर्गावगाहित्वं बाधितमित्याशयेनाह प्रकृते इति ननु तत्त्वमस्यादिवाक्यानां प्रसिद्धमखंडार्थत्वं विहाय कथं संसर्गानवगाहिज्ञानजनकत्वमपूर्वमुक्तमित्याशंक्याह इ

रास
१३

अतिथ्याप्तिः॥३॥

एवकारोप्यर्थे तेन च प्रातिपदिकार्थमात्रपरत्वमखंडार्थत्वमित्यस्य समुच्चयस्तत्राचार्यसंमतिमाह तदुक्तमिति चित्सुखाचार्यैरिति शेषः गिरां तत्त्वमस्यादिवाक्यानां संसर्गासंगिसम्यक्धीहेतुता यासेयमखंडार्थतोक्तानवगाहियथार्थज्ञानहेतुत्वं यत्तदिदमखंडार्थत्वमुक्तमित्यर्थः नासां प्रातिपदिकार्थता खंडार्थतोक्तेतिलक्षणस्य संसर्गपरेवाक्ये व्यभिचारस्तत्रापि प्रातिपदिकार्थप्रतिपादकत्वसत्वादित्याशंक्याह प्रातिपदिकेति तथा च तत्र तन्मात्रप्रतिपादकत्वाभावान्नातिव्याप्तिरितिभावः उक्तप्रत्यक्षज्ञानस्य साक्षिद्वैविध्येन द्वैविध्यमाह तच्चेति संसर्गावगाहित्वानवगाहित्वभेदेपि ज्ञानं चैतन्यरूपमेकमेव तच्च जीवसाक्षीश्वरसाक्षिभेदेन द्विविधमित्यर्थः यत्तु साक्षिपदं तज्जन्यपरं तथा च जीवसाक्षिजन्यमीश्वरसाक्षिजन्यमिति द्विविधमित्यर्थः इतिकेचित् तन्नोपादेयं ज्ञानस्य चैतन्यरूपत्वप्रतिपादनात्तत्र जीवसाक्षिनिरूपणस्य जीवनिरूपणाधीनत्वाज्जीवस्वरूपनिरूपणपूर्वकं तत्साक्षिस्वरूपं लक्षयति तत्रेति जीवसाक्षीश्वरसाक्षिणोर्मध्ये अन्तःकरणस्यावच्छे

तदुक्तं संसर्गासंगिसम्यग्धीहेतुता या गिरामियं उक्ताखंडार्थता यद्वा तत्प्रातिपदिकार्थता प्रातिपदिकार्थमात्रपरत्वं चाखंडार्थत्वमिति च
तुर्थपादार्थः तच्च प्रत्यक्षं पुनर्द्विविधं जीवसाक्षि ईश्वरसाक्षि चेति तत्र जीवो नामांतःकरणावच्छिन्नचैतन्यं तत्साक्षि तु अन्तःकर
14 णोपहितचैतन्यमंतःकरणस्य विशेषणत्वोपाधित्वाभ्यामनयोर्भेदः विशेषणं च कार्यान्वयि व्यावर्तकं उपाधिश्च कार्यानन्वयी व्या
वर्तको वर्तमानश्च रूपविशिष्टो घटो नित्य इत्यत्र रूपं विशेषणं कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमित्यत्र कर्णशष्कुल्युपाधिः॥
अयमेवोपाधिर्नैयायिकैः परिचायक इत्युच्यते॥६॥ ॥९॥ देके त्वे चैतन्यस्य जीवत्वं तस्योपाधित्वे तस्य तत्साक्षित्वमिति तयोर्भेद एतदेव स्फो

रयति अन्तःकरणस्येति विशेषणोपाध्योर्वर्तमानत्वे सति व्यावर्तकत्वं यद्यपि समानं तथापि कार्यान्वयित्वतदनन्वयित्वभेदात्तद्विशिष्टतदुपहितचैतन्ययोरपि भेद इत्याशयेनाह विशेषणं चेति कार्यान्वयि व्यावर्तकं वर्तमानं चेत्यपि बोध्यम् तथा च कार्यान्वयित्वे सति वर्तमानत्वे सति व्यावर्तकत्वं विशेषणत्वम् कार्यानन्वयित्वे सति यथोक्तत्वमुपाधित्वं कार्यपदमात्रावच्छेद्यान्वययोग्यपरं विशेषणोदाहरणमाह रूपेति रूपस्य कार्यान्वयित्वादिसत्त्वाद्विशेषणत्वं उपाध्युदाहरणमाह कर्णेति कर्णशष्कुल्याः कार्यानन्वयित्वादिसत्वादुपाधित्वम् स्वोक्तोपाधेर्नैयायिकैर्व्यवह्रियमाणां संज्ञामाह अयमेवेति॥॥॥

॥विशेषणत्वे॥५॥

नन्वस्तु कर्णशष्कुल्यादेरुपाधित्वमन्तःकरणस्य तु तत्त्वं प्रयोजनशून्यं न हि प्रमाता विषयभासनाय स्वसाक्षिणमपेक्षते चक्षुरादिजन्यवृत्त्यवच्छिन्नचैतन्ये चैव विषयप्रकाशसंभवादित्याशंक्यान्तःकरणस्य जडतया विषयभासकत्वायोगाद्वृत्तीनां नानात्वेन तदवच्छिन्नचैतन्यस्याप्यनेकतया समस्तविषयानुसंधानस्यानुपपत्तेः प्रमातुश्चान्तःकरणावच्छिन्नत्वेन विषयानुसंध्यानार्थमन्यापेक्षत्वात्तदन्वितस्य ब्रह्माभिन्नस्य साक्षिण आवश्यकत्वात्तदुपाधित्वमन्तःकरणस्यावश्यमभ्युपेयमित्याशयेनाह प्रकृत इति· ननु जीवसाक्षिणो ब्रह्माभेदेन स्वयंप्रकाशत्वेन सर्वविषयानुसंधातृत्वाभ्युपगमे ब्रह्मण एकत्वात्तदभिन्नसाक्षिणोऽपि एकत्वाच्चैत्रावगते मैत्रस्याप्यनुसंध्यानप्रसंग इत्याशंक्योपाधिभेदेन तस्य नानात्वस्वीकारान्न दोष इत्याह अयं चेति· एवं जीवसाक्षिणं निरूप्येश्वरसाक्षिणं निरूपयति ईश्वरसाक्षीति· तदपि जीवसाक्षिवन्नाना किंवैकमित्यपेक्षायामाह तच्चैकमिति· तत्र हेतुमाह· तदिति· अनाद्यनिर्वचनीयत्वे सति विपर्ययोपादानभूता विक्षेपशक्तिप्र

प्रकृते चान्तःकरणस्य जडतया विषयभासकत्वायोगेन विषयभासकचैतन्योपाधित्वम् अयं च जीवसाक्षी प्रत्यात्मं नाना एकत्वे मैत्रावगते चैत्रस्याप्यनुसंधानप्रसंगः ईश्वरसाक्षित्वं मायोपहितचैतन्यं चैकम् तदुपाधिभूतमायाया एकत्वात् इन्द्रो मायाभिः पुरुरूप ईयते इत्यादिश्रुतौ मायाभिरिति बहुवचनस्य मायागतशक्तिविशेषाभिप्रायतया मायागतसत्त्वरजस्तमोरूपगुणाभिप्रायतया वोपपत्तेः मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥

धाना माया ननु तस्या एकत्वं मायाभिरिति श्रुतिविरुद्धमित्याशंक्याह· इन्द्र इति इन्द्रो निरंकुशैश्वर्यः परमात्मा मायाभिः पुरुरूपो बहुरूप ईयते प्रतीयते यथा ब्रह्मादेर्दाहकत्वप्रकाशकत्वादिकार्यदर्शनात्तदनुकूलाः शक्तिविशेषाः कल्प्यन्ते तथा जगद्रूपविचित्रकार्यदर्शनान्मायायाः शक्तिकल्पनमिति· तदभिप्रायतयेत्यर्थः· ननु मुख्यार्थपरित्यागे किं कारणमित्याशंक्यानेकश्रुतिस्मृतिगतैकवचनेन सिद्धतदेकत्वनिश्चय एवेत्याह· मायां त्विति· नन्विदमेकवचनं जात्यभिप्रायकं तस्यादित्याशंक्यैतच्चकारानिवर्तकैकपदयुक्तां श्रुतिं पठति अजामिति· जन्मशून्यामनादिभूतां स्वसमानजातीयेतरप्रकृतिशून्यामेकां लोहितशुक्लकृष्णां रजःसत्त्वतमोमयीं बह्वीः प्रजाः समानरूपास्त्रिगुणात्मिकाः सृजमानां एको जन्मा जीवो जुषमाणः सेवमानोऽनुशेते तत्तादात्म्यापन्नो भवति जहात्येनां भुक्तभोगामजोऽन्य ईश्वर

मायया एकत्वे श्रुतितात्पर्यं सिद्धमिति कथं ज्ञातं श्रुतितात्पर्यस्य दुरूहत्वादित्याशंक्य स्मृतिकारानुसारेणेत्याशयेन पराशरस्मृतिं पठति· तरतीति· यस्मिन्परात्मनि हृदि निवशिने वृत्त्यारूढे कृते योगी अविद्यां तरति तस्मै ज्ञानस्वरूपाय अमेयाय वृत्त्यवच्छिन्नचैतन्याय गोचरयन नमः अविद्यां विशिनष्टि विततामिति· प्रपंचाकारेण परिणतत्वात् सर्वत्र व्याप्तामित्यर्थः ननु तन्निवृत्तावपि तात्पर्यनिवृत्तिः सर्वानर्थभूतायामायाया अवशिष्टत्वादित्याशंक्याह· मायामिति· स्वाश्रयाव्यामोहकत्वव्यामोहकत्वविशेषेपि वास्तुतो न तयोर्भेद इत्याशयः ननु स्मृतावपि जातावेकवचनस्य संभवादेकपदस्यामुख्यार्थकतायाः अपि सुवचत्वात्कथं तदेकत्वनिश्चय इत्याशंक्याह लाघवेति· अविद्यायामंतरे वर्तमाना ममममायादुरत्ययेत्यादिश्रुतिस्मृतीनां आदिपदेन संग्रहः उपसंहरति· ततश्चेति· यथोपाधिभूतमायाया एकत्वात्तस्यैकत्वं तथा तस्या अनादित्वात्तस्यानादित्वमपीत्याह· तच्चेति तच्चैतन्यमनाद्यपीत्यर्थः ईश्वरसाक्षिज्ञानस्येश्वरज्ञानापेक्षत्वादाह· मायेति· पूर्ववदत्रापि मायाया विशेषणत्वोपाधित्वाभ्यामीश्वरत्वसाक्षित्वयोर्भेद इत्याह· ॥ मायायाइति ॥ तथा च यथा तत्त्विपाचकपाठकयोर्भेदः किंतु पाचकत्वपाठकत्वयोस्तद्वदत्रेश्वरत्वसाक्षिणोर्भेदोपीश्वरत्वसाक्षित्व॥

तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते योगी मायाममेयाय तस्मै विद्यात्मने नम इत्यादिश्रुतिस्मृतिषु एकवचनबलेन लाघवानुगृहीतेन मायाया एकत्वं निश्चीयते ततश्च तदुपहितचैतन्यं ईश्वरसाक्षितचानादितदुपाधेर्मायाया अनादित्वान्मायावच्छिन्नं चैतन्यं परमेश्वरः मायाया विशेषणत्वे ईश्वरत्व मुपाधित्वे साक्षित्वमिति ईश्वरत्वसाक्षित्वयोर्भेदः न तु धर्मिणोरीश्वरतत्साक्षिणोः स च परमेश्वर एकोपि स्वोपाधिभूतमायानिष्ठसत्वरजस्तमोगुणभेदेन ब्रह्मविष्णुमहेश्वर इत्यादिशब्दवाच्यतां लभते· ॥ योरित्यर्थः ननु मायाया एकत्वाद्यथेश्वरसाक्षिण एकत्वं तथा तदवच्छिन्नस्याप्येकत्वावश्यंभावात्कथं तस्य ब्रह्मादिरूपेण भेदस्तस्य विशेषणभेदमूलत्वात्तद्भेदे च· तस्यैवोपाधितया तदुपहितस्याप्यनेकत्वौचित्यात्कथं तदेकतेत्याशंक्य यथा मायोपाधिगतगुणभेदाभिप्रायेण तदनेकत्वव्यपदेशस्तथा तद्गतगुणावच्छेदेनेश्वरभेदो न तु वस्तुत इत्याशयेनाह· स चेति· उपाधिपदमत्र विशेषणपरं तथा च मायावच्छिन्ने श्वरचैतन्यमेवोद्भूतसत्वगुणमायावच्छिन्नं पालयितृ विष्णुनारायणादिशब्दवाच्यतां भजेत तदेवोद्भूतरजोगुणमायावच्छिन्नं स्रष्टृब्रह्मविधात्रादिशब्दप्रतिपाद्यतां लभते· तदेवोद्भूततमोगुणमायावच्छिन्नं संहर्तृ· महेश्वररुद्रादिशब्दा — भिधेयतामधिगच्छेत् अथ योह खलु वावास्य राजसोंशो ऽसौ स योयं ब्रह्मा अथ योह खलु वावास्य तामसोंशो ऽसौ योयं रुद्रः अथ योह खलु वावास्य सात्विकोंशो ऽसौ स योयं विष्णुरिति मैत्रेयोपनिषदि तथैवावगतेरित्यर्थः ॥ उपास्यं तु त्रिगुणमायावच्छिन्नमेव विष्णुमहेशगणेशदिनेशदुर्गादिरूपेण स्थितं न त्वेकैकगुणप्रधानमायाविशिष्टमुपास्यतस्यनि

वे॰ प॰ नन्वीक्षणस्येश्वरसाक्षिणः सृष्टिपूर्वकालीनत्वप्रतिपादनात्तस्यानादित्वं बाधितं तस्य सादित्वे ईश्वरस्याप्यनादित्वं बाधितमिति शंकते नन्विति यथाभिव्यंजकांतःकर
टी॰ टी॰ णवृत्तेः सादित्वेन तत्प्रतिबिंबितजीवसाक्षिस्वरूपज्ञानस्यापि सादित्वं तथेक्षणाद्यभिव्यंजकमायावृत्तेः सादितया तत्प्रतिबिंबितेश्वरसाक्षिचैतन्यस्येक्षणादिज्ञानस्वरूप
१५ स्यापि सादित्वमतो न तयोः स्वतोऽनादित्वे बाधकमित्याशयेनाह उच्यत इति एवं साक्षिद्वैविध्यप्रतिपादनात्तस्यैव तत्तद्वृत्त्यनुगतस्य ज्ञानत्वात्प्रत्यक्षज्ञानद्वैविध्यमपि सिद्ध
मित्याह एवमिति एवं साक्षिद्वैविध्यनिरूपणं जीवेश्वरसाक्षिजन्यप्रत्यक्षभेदेन प्रत्यक्षज्ञानस्य द्वैविध्यसिद्धमिति न रम्यं ज्ञप्तिगतं प्रत्यक्षत्वं चित्त्वमेवेत्युत्तरग्रं
थविरोधात् कंचिद्विशेषमभिधातुं वृत्तमनुवदति प्रत्यक्षत्वमिति तत्र ज्ञेयगतज्ञप्तिगतप्रत्यक्षत्वयोर्मध्ये नन्वनुमित्यादावतिव्याप्तिरित्याशंक्य सर्वत्रापि तत्तदा

नन्वीश्वरसाक्षिणोऽनादित्वे तदीक्षत बहु स्यां प्रजायेयेत्यादिना सृष्टिपूर्वसमये परमेश्वरस्यागन्तुकमीक्षणमुच्यमानं कथमुपपद्यते उच्यते
यथा विषयेन्द्रियसन्निकर्षादिकारणवशेन जीवोपाध्यन्तःकरणस्य वृत्तिभेदाः जायंते तथा सृज्यमानप्राणिकर्मवशेन परमेश्वरो
पाधिभूतमायायां वृत्तिविशेषा इदमिदानीं स्रष्टव्यमिदानीं पालयितव्यमिदमिदानीं संहर्तव्यमित्याद्याकारा जायंते तासां च वृत्तीनां सादि
त्वात्तत्प्रतिबिम्बचैतन्यमपि सादीत्युच्यते एवं साक्षिद्वैविध्येन प्रत्यक्षज्ञानद्वैविध्यं प्रत्यक्षत्वं च ज्ञेयगतं ज्ञप्तिगतं चेति निरूपितं तत्र
ज्ञप्तिगतप्रत्यक्षत्वस्य सामान्यलक्षणं चित्त्वमेव पर्वतो वह्निमानित्यादावपि वह्न्याद्याकारवृत्त्युपहितचैतन्यस्य स्वांशे स्वप्रकाशतया प्र
त्यक्षत्वात् तत्तद्विषयांशे प्रत्यक्षत्वं तु पूर्वोक्तमेव तस्य च भ्रान्तिरूपप्रत्यक्षेनाऽतिव्याप्तिः भ्रमप्रमासाधारणप्रत्यक्षत्वसामान्यनिर्वचनेन
तस्यापि लक्ष्यत्वात् यदा तु प्रत्यक्षप्रमाया एव लक्षणं वक्तव्यं तदा पूर्वोक्तलक्षणे बाधितत्वविषयविशेषणं देयम् ॥ः॥ः॥ः॥

कारवृत्त्युपहितचैतन्यस्य स्वात्मांशे प्रत्यक्षत्वेन सर्वस्यापि ज्ञानस्य लक्ष्यत्वान्नातिव्याप्तिरित्याह पर्वत इति यत्साक्षादपरोक्षाद्ब्रह्मेत्यादिश्रुत्या चित्त्वस्यैव प्रत्य
क्षत्वाभिधानाच्चिद्रूपस्य ज्ञानस्य स्वात्मांशे स्वप्रकाशतया सर्वस्यापि ज्ञानस्य प्रत्यक्षत्वादित्यर्थः नन्वनुमित्यादौ प्रत्यक्षत्वव्यवहारः कुतो नास्तीत्याशंक्य तत्तद्वि
षयांशनिरूपितप्रत्यक्षत्वप्रयोजकस्य पूर्वोक्तस्याभावादित्याशयेनाह तत्तदिति ननु योग्यविषयस्य स्वगोचरवृत्त्युपहितप्रमातृचैतन्यसत्तानतिरिक्तसत्ताशून्यस्य शु
क्तिरूप्यादेर्ज्ञानेनेतिव्याप्तिरित्याशंक्याह तस्येति प्रत्यक्षप्रमाणनिरूपणे भ्रमप्रमासाधारणप्रत्यक्षत्वसामान्यनिर्वचनमनुपपन्नं मत्वाह यदेति प्रत्यक्षप्रमाया

नन्ववाधितत्वं पारमार्थिकत्वं उत सत्वमात्रं नाद्यः घटादिज्ञाने व्याप्तेः नद्वितीयः शुक्तिरूप्यादिज्ञानेति व्याप्तेस्तादवस्थ्यादित्याशंक्य संसारदशायामबाधितत्ववि
वक्षितमित्याह शुक्तीति· भ्रमस्य भ्रांतिज्ञानस्य प्रातिभासिकत्वं प्रतीतिकालमात्रवृत्तिमितियावत् तथा च तदानीमनिर्वचनीयं रजतामुत्पद्यते तस्य शुक्तिज्ञानबाध्यत्वा
त् ततः ज्ञानस्य बाधितविषयकत्वमिति भावः इदमसहमानोन्यथाख्यातिवादी शंकते नन्विति यद्यपि विसंवादिप्रवृत्या भ्रांतिज्ञाने मिथ्यातिनस्य च विषयं विनानुपपत्तिः त
द्विषयं साधयति तथापि स विषय· प्रातिभासिकस्तत्कालोत्पन्न इत्यत्र नास्ति प्रमाणमित्याह विसंवादीति यद्विषयकप्रवृत्तिस्तस्यालाभेन तस्याः संवादित्वम लाभे तु विसंवादि
त्वं तच्च भ्रांतिजन्यप्रवृत्तेरित्यर्थः ननु विषयांतरानुपपत्तिस्तत्र प्रमाणमित्याशंक्याह देशांतरीयेति· असन्निकृष्टदेशांतरीयं वस्तु न प्रत्यक्षविषयत्वयोग्यमिति दूषयति नेति·
असन्निकृष्टस्य भ्रमे भानं नोपपद्यते प्रत्यक्षसामग्र्याः सन्निकर्षघटितत्वेन तद्रहितस्य प्रत्यक्षविषयत्वायोगादिति भावः नन्वस्तु अलौकिकः सन्निकर्ष इत्याशंक्य स च।
किं सामान्यात्मकः किं वा ज्ञानरूप इति विकल्प्य नाद्यः तत्र प्रमाणाभावात् सन्निकृष्टधूमादिकमेव प्रत्यक्षविषयीभूतं न तु तन्मात्रेयेन सामान्यं प्रत्यासत्तिरिति कल्पना स्यादिति

शुक्तिरूप्यादिभ्रमस्य संसारकालीनबाधविषयप्रातिभासिकरजतादिविषयकत्वेनोक्तलक्षणाभावान्नातिव्याप्तिः ननु विसंवादिप्रवृत्त्या भ्रां
तिज्ञानसिद्धावपि तस्य प्रातिभासिकतत्कालोत्पन्नरजतादिविषयकत्वे न प्रमाणं देशांतरीयरजतस्यैव तद्विषयत्वसंभवादि
ति चेन्न तस्यासन्निकृष्टतया प्रत्यक्षविषयत्वायोगात् न च ज्ञानं तत्र प्रत्यासत्तिः ज्ञानस्य प्रत्यासत्तित्वे तत एव वह्न्यादेः प्रत्यक्षत्वापत्तावनुमानो
च्छेदापत्तेः ननु रजतोत्पादकानां रजतावयवानामभावे शुक्तौ कथं तत्रापि रजतमुत्पद्यत इति चेत् नहि लोकसिद्धसामग्री प्रातिभासिकरज

प्रथमपक्षपरिहारस्मन सि निधाय द्वितीयं पक्षं परिहरति नापीति तं त्र भ्रांतिप्रत्यक्षविषये येन रजतादिना ज्ञान (तोत्पादिका किंतु विलक्षणैव तत्र्याहि· ॥
मेव सन्निकर्ष इति तं च प्रमाणाभावादिति भावः विपक्षे बाधकहेतुमाहः ज्ञानस्येति· तत एव ज्ञानलक्षणप्रत्यासत्तेरेव अलौकिकापि प्रत्यक्षसामग्री अनुमितिसामग्रीतो बलव
त्तीलाघवादिति भावः नन्वेवं तर्हि अपूर्वरजतोत्पत्तिपक्षो प्यसंगतो रजतोपादानलौकिकतदवयवाभावात् अलौकिकानां तथात्वेषां तदुपादानत्वे प्रमाणाभावादिति शंकते
नन्विति अन्यथोपपत्त्यभावात् प्रातिभासिकरजतोत्पत्त्यंगीकारस्यावश्यकत्वात् तदनुकूला तत्सामग्री कल्पनीयेति समाधानं प्रतिजानीते उच्यत इति· लौकिकोपादानाभावात् रज
तोत्पत्तिर्न संभवतीति न सांप्रतम् ॥ उपादानोपादेययोः सादृश्यावश्यंभावादिलौकिकरजतोत्पादनेन लौकिकसामग्र्यपेक्षेत्याह नहीति· तत्व्यतिरिक्तसामग्र्यभावात्
एवं च तर्हि किं त्विति· यथा प्रातिभासिकं रजतं लौकिकरजतविलक्षणं तथा तदुत्पादिका सामग्र्यपि लोकप्रसिद्धसामग्रीतो विलक्षणैवेत्युत्तरमाह· विलक्षणेति· नहि तस्य रूपव

तथाहीति· तत्र चैतन्ये प्रतिबिंबिते सति पूर्वोक्तरीत्या नडागोदकमित्याद्युक्तरीत्या नतश्च त्रिविध चैतन्याभेदसंपत्त्यनंतरं च अविद्या रजतरूपार्थाकारेण रजत
ज्ञानाभासाकारेण च परिणमत इत्यन्वयः ननु अविद्याया एवाकाशादिप्रपंचोपादानत्वाभ्युपगमान्न निद्राहानिरित्याशंकानिरासाय प्रमातृ चैतन्येत्यादि विशे
षणद्वयं ननु यथोक्ताविद्या सर्वदा यथोक्ताकारेण कुतो न परिणमत इति चेत् निमित्तकारणविरहादित्यभिप्रेत्य निमित्तकारणमाह· रजतसंस्कारेति यद्यपि संस्कारोपि
सर्वदा वर्तते· तथाप्युद्बोधितस्य निमित्तत्वमित्यभिप्रेत्योक्तमुद्बोधक चिक्या दीति चाकचिक्यादेः सादृश्यस्य संदर्शनेन मुद्बोधितो रजतसंस्कारस्तत्सहक्षणया सामग्र्या सह
कृता ननु चाकचिक्यादिसादृश्यसंदर्शने नीलपृष्ठत्रिकोणता ऽदर्शने च किं निमित्तमित्यपेक्षायामाह काचादीति नेत्रनिष्ठ काचादिदोषसंयुक्ता परिणमत इत्युक्तम्· तत्र

काचकामलादिदोषदूषितलोचनस्य पुरोवर्त्तिद्रव्यसंयोगादिदमाकारा चाकचिक्याकारा च्चिदंतः करणवृत्तिरुदेति तस्यां च वृत्तावदिदमवच्छिन्न
चैतन्यं प्रतिबिंबिते तत्र पूर्वोक्तरीत्या वृत्तेर्निर्गमनेनेदमनेनेदमवच्छिन्न चैतन्यं वृत्त्यवच्छिन्न चैतन्यं प्रमातृ चैतन्यं चाभिन्नं भवति ततश्च प्रमातृ चैतन्या
भिन्नविषय चैतन्यनिष्ठा शुक्तित्वप्रकारिकाविद्या चाकचिक्यादिसादृश्यसंदर्शनसमुद्बोधितरजतसंस्कारसध्रीचीना काचादिदोषसमवहिता रजतरू
पार्थाकारेण रजतज्ञानाभासाकारेण च परिणमते परिणामो नाम उपादानसमसत्ताककार्यापत्तिः विवर्तो नाम उपादानविषमसत्ताककार्यापत्तिः प्राति
भासिकरजतं चाविद्यापेक्षया परिणामः चैतन्यापेक्षया विवर्त इति· चोच्यते· अविद्यापरिणामरूपं च तद्रजतमविद्याधिष्ठाने इदमवच्छिन्न चैतन्ये व
र्तते अस्मन्मते सर्वस्यापि कार्यस्य स्वोपादानाधिष्ठानाश्रितत्वनियमात् ननु चैतन्यनिष्ठस्य रजतस्य कथमिदं रजतमिति पुरोवर्तितादात्म्यम् ॥:॥:॥:

किंलक्षणः परिणाम इत्यपेक्षायां तल्लक्षणमाह परिणाम इति पदभिन्नं कार्यमुत्पद्यते नेनद् पादानकरणं ॥ तेन समासत्ताय स्य कार्यस्य तथाभूतकार्यस्यापत्तिः यथोक्तकार्य
कारणोद्भवो यथा व्यावहारिकसत्ताकदुग्धेन तत्समसत्ताक दधिरूपकार्यापत्तिरित्यर्थः विवर्तेति व्याप्तिवारणाय समसत्ताकेति· समसत्ताकपदव्यावर्त्यत्वात् वक्ष्यमाणोपयुक्तत्वा
च्च विवर्तं लक्षयति विवर्तो नामेति· उपादानाद्विषमासत्ताय स्य कार्यस्य तदापत्तिः परिणामेति व्याप्ति निरासाय विषमसत्ताकेत्युक्तं प्रातिभासिकरजतादेः परिणामत्व विवर्तत्वं चा
स्तीत्याह प्रातिभासिकेति ननु अविद्यापरिणामस्य रजतस्याविद्याश्रयतादात्म्यसंबंधेन वर्तमानस्य चैतन्ये तत्संबंधेनावृत्तमानत्वाच्चैतन्योपादानकत्वासंभवात् कथमुक्तवि शम
वर्तितारजतस्येत्याशंक्याविद्यापरिणामस्य तदधिष्ठानाश्रितत्वनियमान्नोक्तदोष इत्याह· अविद्येति· नन्वेवं नहि पुरोवर्त्तितादात्म्यप्रत्ययानुपपत्तिरिति शंकते· नन्विति॥ १६

अविद्यापरिणामस्याविद्याधिष्ठानाश्रितत्ववच्चैतन्याध्यस्तस्यरजतादेःतदवच्छेदकपुरोवर्त्तिनाऽऽत्म्यप्रत्ययोपपत्तिरित्याशयेनसमाधत्तेउच्यते।इतिब्राह्मणोहं
सुखीममदेहःसुखीत्येवंशरीरनिष्ठत्वेनदेहस्यात्मनिसुखाद्युपलब्ध्यवच्छेदकत्ववदिदमंशचैतन्येरजताध्यासस्यावच्छेदकत्वादुक्तप्रत्ययउपपद्यतइत्याहतथाचेत।
न्यैतिनन्विदमवच्छिन्नचैतन्यंध्यस्तरजतादेःसाक्षिण्यनध्यस्ततयातस्यकेवलसाक्षिवेद्यतासुखादेरिवानन्यवेद्यताचसंप्रदायिकैरुच्यमानाकथमुपपद्यतइत्याशंक्या
ह·तस्यचेति·ननुसुखादीनामवच्छेदकशरीरनिष्ठत्वेनोपलंभोनसर्वदा·अहंसुखीत्यात्मनिष्ठत्वेनाप्युपलंभदर्शनात्‌ तथारजतादेरप्यंतःसाक्षिण्यध्यस्तत्वाभ्युपगमाद
हंमनुष्यइतिवदहंरजतमहंसुखीतिवदहंरजतवान्‌ इत्येवंवाप्रत्ययःकदापिकुतोंभ वति इत्याशंकते नन्विति·नहियत्रयद ध्यासस्तस्यतन्निविद्याकार्यत्वप्रयु क्तं त

17

उच्यते·यथान्यायमतेआत्मनिष्ठस्यसुखादेःशरीरनिष्ठत्वेनोपलंभःशरीरस्यसुखाद्यधिकरणतावच्छेदकत्वात्‌ तथाचैतन्यमात्रस्यर
जतंप्रत्यनधिष्ठानतयाइदमवच्छिन्नेचैतन्यस्यतदधिष्ठानत्वेनेदमोवच्छेदकतयारजतस्यपुरोवर्त्तिसंसर्गप्रत्ययउपपद्यतेतस्यचविषयचै
तन्यस्यतदंतःकरणोपहितचैतन्याभिन्नतयाविषयचैतन्याध्यस्तमपिरजतंसाक्षिण्यध्यस्तकेवलसाक्षिवेद्यंसुखादिवदनन्यवेद्यमिति।
चोच्यतेननुसाक्षिण्यध्यस्तत्वेऽहंरजतमितिप्रत्ययःस्यात्‌·अहंसुखीतिवदिति चेदुच्यते नहिसुखादीनामंतःकरणावच्छिन्नचैतन्यनिष्ठा
विद्याकार्य — त्वंतस्यतदाकारानुभवविषयत्वमित्येवानुगतनियामकम्‌तथाच·इदमाकारानुभवाहितसंस्कारसहकृताविद्याकार्य
त्वात्‌ घटादेरिदमाकारानुभवविषयत्वमहमाकारानुभवाहितसंस्कारसहिताविद्याकार्यत्वादंतःकरणादेरहमाकारानुभवविषयत्वं
शरीरेंद्रियादेरुभयविधानुभवसंस्कारसहिताविद्याकार्यत्वादुभयविधानुभवविषयत्वम्‌ तथाचोभयविधोनुभवःइदंशरीरमहंदेही
अहंमनुष्यःअहंब्राह्मणःइदंचक्षुरहंकाणःइदंश्रोत्रमहंवधिरइति। निष्ठतयैवज्ञानमितिनियमःसंभवतिसुखादेर्घटादिवत्‌·शुद्धचैतन्याध्यस्तत्वे
प्यहंसुखीतिप्रत्ययदर्शनात्‌·इत्याशयेनसमाधत्ते·उच्यतइतितर्हिघटादेःसुखादेःशुक्तिरूप्यादेश्चतत्प्रतीतिविषयत्वे·पृथक्पृथक्नियामकमुक्तंकमितिपृच्छति·
किंत्विति·नानानियामकाभ्युपगमेगौरवादनुगतैकनियामकस्वीकारउचितइत्युत्तरमाह·यस्येति·उक्तनियामकंसर्वत्रयोजयति·तथाचेति·निरुक्तानुगतनियाम
केसतिअयंघटःअहमितीदमाकारानुभवस्याहमाकारानुभवस्यचस्पष्टत्वमभिप्रेत्योभयविधाकारानुभवमावेदयति·तथाचेतिअयस्योभयविधानुभवस्यवि

निरुक्तनियामकं प्रकृते योजयति· प्रकृते चेति· यद्यपि शुक्तिरूप्यादौ प्रमातृचैतन्याभिन्नेदमंशावच्छिन्नचैतन्यनिष्ठाविद्याकार्यत्वमस्ति तथापि न सहकारिकारणं इदं रजतमित्यादि सत्यरजतस्थलीयेदमाकारानुभवाहितसंस्कारो। न तस्येदमाकारानुभवविषयत्वं न त्वहमनुभवविषयत्वमिति भावः नन्वस्तु शुक्तिरूप्यस्येदमाकारानुभवविषयत्वं तथापि न तद्विषयाविद्यावृत्तिराश्रयणीया तस्य साक्षाद् नाद्यन्तसाक्षिसंबंधितयापरोक्षभानसंभवादिति स्वयूथ्यः शंकते नन्वेवमपीति· यद्यपि। साक्ष्यध्यस्तरजतस्य साक्षिचैतन्याभिन्नसत्ताकत्वमस्ति तथापि· न तस्यापरोक्षत्वं संभवति साक्षिचैतन्यस्य रजतगोचरवृत्त्युपहितत्वाभावात् तस्मात्तदपरोक्षतार्थमविद्यावृत्तेरावश्यकता तिं समाधत्ते नेति· चैतन्याभिन्नसत्ताकत्वाभावस्य चैतन्याभिन्नसत्ताकत्वस्य नन्वेवमेकं संधातुं प्रवृत्तस्यापरं हीयत इति न्यायापातः रजतापरोक्ष

प्रकृते च प्रातिभासिकरजतस्य प्रमातृचैतन्याभिन्नेदमंशावच्छिन्नचैतन्यनिष्ठाविद्याकार्यत्वेपि इदं रजतमिति सत्यस्थलीयेदमंशाकारानु।
भवाहितसंस्कारजन्यत्वादिदमाकारानुभवविषयता न त्वहं रजतमित्यहमाकारानुभवविषयतेत्यनुसंधेयम् नन्वेवमपि मिथ्यारजतस्य सा
क्षात्साक्षिसंबंधितया भानसंभवे रजतगोचरज्ञानाभासरूपाया अविद्यावृत्तेरभ्युपगमः किमर्थ इति चेन्न स्वगोचरवृत्त्युपहितचैतन्याभि।
न्नसत्ताकत्वाभावस्य विषयापरोक्षरूपतया रजतस्यापरोक्षत्वसिद्धये तदभ्युपगमात् नन्विदंवृत्ते रजताकारवृत्तेश्च प्रत्येकमेकैकविषयत्वे।
गुरुमतवत् विशिष्टज्ञानानभ्युपगमे कुतो भ्रमज्ञानसिद्धिरिति चेन्न वृत्तिद्वयप्रतिबिंबितचैतन्यस्यैकस्य सत्यमिथ्यावस्तुतादात्म्यावगा
हित्वेन भ्रमत्वस्य स्वीकारात् अत एव साक्षिज्ञानस्य सत्यासत्यविषयतया प्रामाण्यानियमात् अप्रामाण्योक्तिः संप्रदायिकी नाम ॥ः

ता सिद्धये॥ विद्यावृत्त्यभ्युपगमे प्राभाकरमतवद्विशिष्टज्ञानानभ्युपगमप्रसंगेन रजतज्ञानस्य भ्रमत्वहानात् प्राभाकरमते हीदं रजतमित्यत्र ज्ञानद्वयमंगीकृतमतत्रेदमिति पुरोवर्तिविषयमनुभवात्मकं ज्ञानं रजतमित्यसन्निकृष्टरजतविषयं स्मरणात्मकं अतो वस्तुद्वयतादात्म्यावगाहिविशिष्टज्ञानं क्वापि नास्तीति सर्वमपि ज्ञानं यथार्थमेवेति· भ्रमज्ञानासिद्धिस्तद्वदस्मन्मतेपि वृत्तितद्विषयभेदाभ्युपगमे वस्तुद्वयतादात्म्यावगाह्येकज्ञानानभ्युपगमात् भ्रमज्ञानं न सिध्यतीति· स एव शंकाते· नन्विदमिति· वृत्तिभेदेपि नास्ति ज्ञानभेदस्तयोरेकदेशस्थत्वेन तत्प्रतिबिंबितचैतन्यस्यैकत्वान्नैवमित्याह नेति· यत एकस्यैव साक्षिज्ञानस्य सत्यासत्यवस्तुविषयत्वमत एव तस्याप्रामाण्योक्तिः सांप्रदायिकानां संगतेत्याह अत एवेति· ॥ः

टी·प·५॥ ज्ञानद्वयं स्मरणानुभवात्मकम् ॥५॥

नन्वेवं महता प्रयासेन शुक्तिरूप्यस्याविद्याकार्यत्वाध्यस्तत्वसाधनं देशांतरीयरजताद्वैलक्षण्यसिध्यर्थं तच्च न संभवति भवत्सिद्धांते देशांतरीयरजतादेरपि तथात्वाभ्युप
गमात् तथा चोपलभ्यमानवैलक्षण्ये को हेतुरिति नैयायिकः शंकते· ननु सिद्धांत इति· त्वन्मते सत्यत्वाविशेषेपि शब्दत्वानेच्छादीनां क्षणिकत्वं घटादीनां स्थायित्वमि।
निवैलक्षण्ये यन्नियामकं तदेव ममाप्यस्त्विति परिहरति नेति कालान्तरोपलंभानुपलंभादिकमादिपदेन गृह्यते तेन तथा च पक्षद्वयेपि दोषपरिहारयोः समत्वादेकस्य नि
योगोनुपपन्न इति भावः मम त्वन्यदपि वैलक्षण्यनियामकमित्याशयेनाह· यद्वेति अत एवागंतुकदोषजन्यत्वस्य प्रातिभासिकत्वप्रयोजकत्वादेव ननु स्वप्नोपलब्धरथा
दीनां प्रातिभासिकत्वाभ्युपगमे तेषां तात्कालिकोत्पत्तिरायाता सा चानुपपन्ना स्मरणमात्रेण लब्धव्यवहारोपपत्त्या सृष्टिकल्पनानौचित्यादित्यख्यातिवादी शंकते ननु
स्वप्नेति· प्रतीतिविरोधान्मैवमित्याह नेति· स्मरणमात्रमस्तीत्ययुक्तं रथं पश्यामि गीतं शृणोमीत्याद्यनुभवविरोधात् ननु दोषवशात् स्मरामीत्यस्य प्रमोषात्पश्यामी·

ननु सिद्धांते देशांतरीयरजतमप्यविद्याकार्य्यमध्यस्तं चेति कथं शुक्तिरूप्यस्य ततो वैलक्षण्यमिति चेत् न त्वन्मते सत्यत्वाविशेषेपि केषां
चित् क्षणिकत्वं केषांचित् स्थायित्वमित्यत्र यदेव नियामकं तदेव स्वभावविशेषादिकं ममापि यद्वा घटाद्यध्यासे अविद्यैव दोषत्वेनापि
हेतुः शुक्तिरूप्याद्यध्यासे तु काचादयो दोषा अपि तथा चागंतुकदोषाजन्यत्वं प्रतिभासकत्वे प्रयोजकं अत एव स्वप्नोपलब्धरथादीनामागंतु
कनिद्रादिदोषजन्यत्वात्प्रातिभासिकत्वम् ननु स्वप्नस्थले पूर्वानुभूतरथादेः स्मरणमात्रेणैव व्यवहारोपपत्तौ न रथादिसृष्टिकल्पने गौरवादि
ति चेन्न रथादेः स्मरणमात्राभ्युपगमे रथं पश्यामि स्वप्ने रथमद्राक्षमित्याद्यनुभवविरोधापत्तेः अथ रथान् रथयोगान् पथः सृजत इति·
त्याद्याकाराप्रतीतिरित्याशंक्याह॥ स्वप्न इति॥ दोषनिवृत्तिकालेपि· स्वप्ने रथमद्राक्षमित्येव प्रतीतिर्नतु स्मृ रथादिसृष्टिप्रतिपादकश्रुतिविरोधापत्तेश्च·
नवानिति प्रतीतिरत उक्तप्रत्ययव्यवहारस्य न स्मृति· मात्रादुपपत्तिरिति भावः अत्रानुभवपदं प्रतीतिपरं ननु जाग्रत्कालीनप्रतीतिरपि न विरुध्यते स्वप्ने॥
स्थलेनुभवाकारतयोत्पन्नत्वेन तथैव परामर्शौचित्यात् तस्मान्नौरवग्रस्त रथादिसृष्टिर्न कल्पनीयेत्याशंक्याह अथेति· जाग्रद्भोगप्रदकर्मोपरमे स्वाप्नभोगप्रद
कर्माभिव्यक्त्यनंतरं रथान् रथयोगान् तदुपकरणभूतान् अश्वादीन् तद्योग्यमार्गांश्च सृजत इति· तत्सृष्टिप्रतिपादकश्रुत्या गौरवस्य प्रामाणिकतया उक्तप्रतीतेरन्यथा

वे·प· उक्तश्रुतिविरोधादन्यथाख्यातिरप्ययुक्तेति मनसि निधायोपसंहरति· तस्मादिति· प्रातिभासिकपदं विवरणं यावत्प्रतिभासमवतिष्ठन्त इति प्रतिभासनियतसत्ता
टी·टी काइ ति यावत् ननु शुक्तिरूप्यादेर्यथा पुरोवर्तिवस्त्वधिष्ठानं तथा स्वप्नरथादेरप्यधिष्ठानं वक्तव्यं· तत्किं चैतन्यमुत देशविशेषः आद्येपि तत्किं शुद्धमुतान्तःकरणाव
१८ च्छिन्नं नोभयमपि तयोरधिष्ठानत्वेनाप्रतीतेः द्वितीयेपि स किं वाह्यो उत स्वाप्निकः नाद्यः तस्यासन्निकृष्टतया प्रत्यक्षज्ञानविषयत्वायोगात् न द्वितीयः अधिष्ठानतयोप
लभ्यमानस्यापि तस्य सन्निकृष्टतया प्रातिभासिकत्वावश्यंभावेनाधिष्ठानसापेक्षतयानत्वायोगादित्याशयेन शंकते ननु स्वप्नेति· तदा स्वप्नावस्थायां रथाद्य
धिष्ठानतयोलभ्यमानदेशविशेषस्यापि सन्निकृष्टतयानिर्वचनीयप्रातिभासिकदेशोभ्युपगन्तव्य इत्यन्वयः प्रथमपक्षमवलंब्य परिहरति नेति· ननु चैतन्यस्य
पुरोवर्तिवत् वृत्त्यवच्छिन्नज्ञानविषयत्वाभावात् कथमधिष्ठानतेत्याशंक्याह स्वयंप्रकाशेति· स्वप्रकाशपरप्रकाश्यसाधारणं ज्ञायमानत्वमेवाधिष्ठानत्वप्रयो

तस्माच्छुक्तिरूप्यवत् स्वप्नोपलब्धरथादयोपि प्रातिभासिकाः यावत्प्रतिभासमुपतिष्ठन्ते ननु स्वप्नरथाद्यधिष्ठानतयोपलभ्यमानदेशविशे
षस्यापि तदा संनिकृष्टतयानिर्वचनीयप्रातिभासिकदेशोभ्युपगन्तव्यः तथा च रथाद्यध्यासः कुत्रेति चेन्न· चैतन्यस्य स्वयंप्रकाशस्य र
थाद्यधिष्ठानत्वात्प्रतीयमानरथाद्यस्तीत्येव प्रतीयते इति सद्रूपेण प्रकाशमाने चैतन्यमेवाधिष्ठानं देशविशेषोपि चिद्रूपस्तः प्रातिभा
सिकः रथादाविन्द्रियग्राह्यत्वमपि प्रातिभासिकं तदा सर्वेन्द्रियाणामुपरमात् अहं गज इत्यादिप्रतीत्यापादनन्तु पूर्ववन्निरसनीयम्

जकं लाघवादिति भावः ननु स्वयंप्रकाशस्यापि तस्य न तदा चिद्रूपेण भानं रथादिजडाद्यधिष्ठानत्वनिर्वाहकं प्रतिकूलरूपत्वान्नाप्यानंदरूपेण तस्य मूलाज्ञाननि
वृत्तिमन्तराभानासंभवादित्याशंक्याह· प्रतीयमानेति अत्रायं रथ इत्यधिष्ठानतया प्रतीयमानस्यापि देशविशेषस्य प्रातिभासकत्वान्नाधिष्ठानतेत्याह देशविशे
षोपीति किं च इन्द्रियग्राह्यत्वमपि तत्र कल्पितमित्याह रथादाविति तत्र हेतुमाह· तदेति· ननु स्वप्नगजाद्यधिष्ठानं· यद्यपि चैतन्यं तथापि तस्यांतःकरणावच्छि राम
न्नमस्त्येव स धीः स्वप्नो भूत्वेमं लोकमनुसंचरेदित्यादिश्रुतेः तथा चाहं गज इति प्रतीत्यापत्तिरित्याशंक्याह· अहं गज इति पूर्ववदिति यथा शुक्तिरजतादेरिदमा १८
काराणुभवाहितसंस्कारसहकृताविद्याजन्यत्वादहं रजतमिति· प्रतीत्यापादनमयुक्तं तद्वदहं गज इति। प्रतीत्यापादनमपीत्यर्थः॥:॥:॥:॥:॥:॥:॥

ननु स्वप्नगजादेस्तत्कालोत्पन्नत्वामनुपपन्नं तेषामुपादानासंभवात् न तावच्चैतन्यं तदुपादानं तस्यापरिणामित्वात् नापि मूलाविद्या तस्यास्तदवयवसापेक्षायाः
साक्षात्तदुपादानत्वासंभवात् नापि मूलाविद्या तस्या बाह्यदेशावच्छिन्नचैतन्याश्रितायास्तत्वादित्याशंक्याह स्वप्नगजादय इति मायापरिणामा मूलावि-
द्योपादानकाः स्वप्नगजादीनां प्रातिभासिकत्वान्न लौकिकावयवापेक्षा न चैवं सुषुप्तौ तत्प्रतिभासापत्तिरिति वाच्यम् रागद्वेषादिवन्निमित्तकारणस्यांतःकरणस्य तदा-
नीमभावात् अन्तःकरणस्य निमित्तकारणत्वकल्पनापेक्षया तद्द्वारा विद्यापरिणामित्वकल्पनैव वरं इत्यभिप्रायवतां पक्षमाह अन्तःकरणेति ननु ध्वस्तस्या-
धिष्ठानसाक्षात्कारनिवर्त्यत्वनियमात् तत्साक्षात्काराभावात् जागरणे तेषामनुवृत्तिप्रसंगो दुर्वार इति शंकते ननु गजादेरिति· यद्यप्यधिष्ठानसाक्षात्कारवि-

स्वप्नगजादयः साक्षान्मायापरिणामा इति केचित् अंतःकरणद्वारा तत्परिणामा इत्यन्ये ननु गजादेः शुद्धचैतन्याध्यस्तत्वे इदानीम-
॥धिष्ठानसाक्षात्काराभावेन जागरणेपि स्वप्नोपलब्धगजादयोनुवर्तेरन् उच्यते कार्यविनाशो हि द्विविधः कश्चिदुपादानेन सह
कश्चिद्विद्यमान एवोपादाने आद्यो बाधः द्वितीयस्तु निवृत्तिः आद्यस्य कारणमधिष्ठानतत्वसाक्षात्कारः तेन विनोपादान भूता-
यामविद्यायामनिरस्ते द्वितीये विरोधिवृत्त्युत्पत्तिर्दोषनिवृत्तिश्च तदिह ब्रह्मसाक्षात्काराभावात् स्वप्नप्रपंचोभावाधिष्ट मुश-
लप्रहारेण घटादेरिव विरोधिप्रत्ययांतरोदयेन स्वप्नजनकीभूतनिद्रादिदोषनाशेन वा गजादिनिवृत्तौ को विरोधः॥ ॥ ॥ ॥

नाध्यस्तस्य बाधो न संभवति तथापि तं विनापि तन्निवृत्तिसंभवात् न तदनुवृत्तिप्रसंग इति· समाधानं प्रतिजानीते उच्यत इति· बाधरूपनाशाभावेपि
निवृत्तिरूपनाशं प्रकृते दर्शयितुं नाशद्वैविध्यमाह कार्यविनाशो हीति उपादानेनाज्ञानेन अंशस्य बाधसंज्ञस्य उपादानेन सह नाशस्य तत्समान्नाश॥
स्य द्वैविध्याद्धेतोरिह जागरणे ब्रह्मसाक्षात्काराभावात् स्वप्नप्रपंचोभावाधिष्ट गजादिनिवृत्तौ को विरोध इत्यन्वयः तत्र हेतुमाह विरोधीति· यथोपा-
दानसत्वेपि मुशलप्रहारेण घटादिनिवृत्तिर्भवति· तथा विरोधिवृत्त्यंतरोदयेन गजादेरपि निवृत्तिरुपपद्यते स्वप्न एव अश्वादिप्रत्यये गजादिनिवृत्तिदर्श-
नात् विरोधिवृत्त्यंतरनिवृत्तौ पुनरुत्पत्तिमाशंक्य हेत्वंतरमाह स्वप्नजनकीभूतेति· स्वप्नप्रतीतिजनकीभूतेत्यर्थः आदिपदेनादृष्टादिसंग्रहः॥ ॥

ननु शुक्तिरूप्यस्य बाधो निवृत्तिर्वान्यपेक्षायामाह एवं चेति· कार्यनाशस्य द्वैध्यसिद्धेः सति शुक्तिरिति ज्ञानेनेति नेदं रजतमिति ज्ञानेन त्वनुवादः शुक्तित्वप्रकारकं ज्ञानस्य रजतादिभेदाज्ञाननिवर्तकत्वात् तदुक्तं पंचपादिकायां शुक्तित्वज्ञानमेव बाधकं नेदं रजतमित्यनुवाद इति रजतस्य बाधः उपादानेन सह नाशः मूलाविद्यायाश्च मूलाज्ञानस्यैवावस्थाविशेषास्तदुक्तं विवरणे मूलाज्ञानस्यैवावस्थाभेदा रजताद्युपादानानि शुक्तिकादिज्ञानैः सहाध्यासेन निवर्तन्त इति मूलाविद्याकार्यत्वपक्षे तु स्वप्नगजादिवन्निवृत्तिरित्याह मूलाविद्येति नन्वस्मिन्पक्षे शुक्तिरूप्यज्ञाने प्रमात्वप्रसंगः संसारदशायामबाधितत्वघटितस्य लक्षणस्य सत्त्वादिति चेन्नाबाधितपदेनागंतुकदोषाजन्यस्य विवक्षितत्वात् ननु शुक्तिरजतस्याविद्याकार्यत्वात् प्रतिभाससमये सत्त्वास्वीकारे नेदं

एवं च शुक्तिरूप्यस्य शुक्त्यवच्छिन्नचैतन्यनिष्ठतूलाविद्याकार्यत्वपक्षे शुक्तिरिति ज्ञानेन तदज्ञानेन सह रजतस्य बाधः मूलाविद्याकार्यत्वपक्षे तु मूलाविद्याया ब्रह्मतत्त्वसाक्षात्कारमात्रनिवर्त्यतया शुक्तित्वज्ञानेनानिवर्त्यतया रजतस्य तत्र शुक्तिज्ञानान्निवृत्तिमात्रं मुशलप्रहारेण घटस्येव ननु शुक्तौ रजतस्य प्रतिभाससमये प्रातिभासिकसत्त्वाभ्युपगमे नेदं रजतमिति त्रैकालिकनिषेधज्ञानं न स्यात् किन्त्विदानीमिदं न रजतमिति· इदानीं घटः श्यामो नेतिवदिति चेन्न नहि तत्र रजतत्वावच्छिन्नप्रतियोगिताकाभावो निषेधधीविषयः किन्तु लौकिकपारमार्थिकत्वावच्छिन्नप्रातिभासिकरजतप्रतियोगिताकः व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावाभ्युपगमात् ०

रजतमिति त्रैकालिकनिषेधानुपपत्तिरिति· शंकते· ननु शुक्ताविति· विषयभेदादविरोध इति· परिहरति· नेति· हि यस्मात्तत्र नेदं रजतमिति· त्रैकालिकनिषेधज्ञाने रजतत्वावच्छिन्नप्रतियोगिताकाभावो निषेधज्ञानविषयो न भवति तर्हि कीदृशोऽभावस्तद्विषय इति पृच्छति· किन्त्विति· व्यावहारिकत्वावच्छिन्नप्रातिभासिकरजतप्रतियोगिताकोऽभावो निषेधबुद्धिविषयः तत्र हेतुमाह· व्यधिकरणेति· विरुद्धं व्यावहारिके रजताद्यधिकरणं यस्य स व्यधिकरणः स चासौ धर्मश्च लौकिकपारमार्थिकत्वं तदवच्छिन्ना प्रातिभासिकरजतप्रतियोगिता यस्य तादृशाभावस्याभ्युपगमात्· ॥ ॥ ॥ ॥

नन्विदमनुपपन्नं व्यधिकरणधर्मस्यावगमे ऽनवगमे चानुपपत्तेरिति शंकते नन्विति अवगमपक्षमवलंब्य परिहरति नेति नन्वत्र लौकिकपारमा
र्थिकत्वोत्पत्तिः कुतो नाभ्युपगम्यत इत्याशंक्याह यत्रेति यत एव मत एव यत्रारोप्यं सन्निकृष्टं न तत्र प्रातिभासिकवस्तूत्पत्तिः स्वीक्रियत इत्याह अत एवेन्द्रिय
सन्निकृष्टमपि जपाकुसुमं हस्तादिद्रव्यान्तरव्यवधानाद सन्निकृष्टं तत्र स्फटिके निर्वचनीय लौहित्योत्पत्तिरंगीकार्येति शंकते नन्विति इष्टापत्त्या परिह

ननु प्रातिभासिके रजते पारमार्थिकत्वमवगतं न वा ऽनवगमे प्रतियोगितावच्छेदकावच्छिन्नरजतत्वज्ञानाभावाद भावप्रत्य
क्षानुपपत्तिः अवगमे ऽपरोक्षावभासस्य तत्काली नविषयसत्तानियतत्वात् रजते पारमार्थिकत्वमप्यनिर्वचनीयं रजतवदे
वोत्पन्नमिति तदवच्छिन्नरजतसत्त्वे तदवच्छिन्नाभावस्तस्मिन् कथं वर्तत इति चेन्न पारमार्थिकत्वस्याधिष्ठाननिष्ठस्य रज
ते प्रतिभाससंभवेन रजतनिष्ठपारमार्थिकत्वोत्पत्त्यनभ्युपगमात् यत्रारोप्यमसन्निकृष्टं तत्रैव प्रातिभासिकवस्तूत्पत्तेरंगीकारा
४० त् अत एवेन्द्रियसन्निकृष्टतया जपाकुसुमगतलौहित्यस्य स्फटिके भानसंभवात् न स्फटिके निर्वचनीयलौहित्योत्पत्तिः नन्वेवं
यत्र जपाकुसुमं द्रव्यान्तरव्यवधानाद सन्निकृष्टं तत्र लौहित्यप्रतीत्या प्रातिभासिकलौहित्यं स्वीक्रियतामिति चेन्न इष्टत्वात्॥

रति॥ नेति नन्विन्द्रियसन्निकृष्टप्रभायाः स्फटिके भानसंभवाद् निर्वचनीयलौहित्योत्पत्तिरनुपपन्नेति चेन्नास्वच्छद्रव्यस्य जपाकुसुमस्य प्रभाया एवा
सिद्धेः तदुक्तं पंचपादिकायां यथा पद्मरागादिप्रभा निराश्रया एवमुत्सुखोपलक्ष्यते न तथा जपाकुसुमादेरिति तथा चासन्निहितस्य परत्रावभासो ऽध्यास इत्यध्या
सलक्षणं न क्वापि व्यभिचरतीति भावः ननु शुक्त्यादौ रजताध्याससंभवे ऽप्यहंकारादेरात्मनि सन्न संभवति तस्याधिष्ठानत्वानुपपत्तेः अधिष्ठानं ह्यध्यस्यमा

अज्ञानप्रतिबिंबे १ ज्ञानस्य ध॥ः

वे॰प॰ नसदृशमंशद्वयवत्परिच्छिन्नमध्यस्यमानेनसहैकज्ञानविषयत्वयोग्यंच दृष्टमितिचेदुच्यते॰ अहंकारादिकार्य्यस्यज्ञानविकल्पितएवाध्यस्यते।
टी॰दी॰ कार्य्यस्यकारणावच्छिन्नएवाध्यासौचित्यात्॰ नचैतावतासमानाश्रयत्वभंगः बिंबप्रतिबिंबयोरेकत्वेननद्वंगाभावात् तस्मादहंकाराद्यधिष्ठानचैतन्य
२० स्याभिधेयत्वादिसंभवात् प्रातीतिकोघटादिव्यावृत्तत्वाकारेणाप्यहंकारादिभिरात्मनःसादृश्यसंभवादविद्ययासांशत्वं विषयत्वपरिच्छिन्नत्वानामपिसंभ
वादात्माधिष्ठानंभवत्येव नापिप्रमाणदोषाभावः अविद्यायाएवदोषत्वात् नचात्मनोविषयत्वादिसमाश्रयणेऽयंसिद्धांतःशं ॥ः असुखस्यतस्यननावद
यमेकांतेनाविषयोऽस्मत्प्रत्ययविषयत्वादित्यादिवद्द्विर्भाष्यकारैरेवसमाश्रितत्वात् किंचाव्यवधानेनप्रकाशमानत्वमेवाधिष्ठानत्वप्रयोजकंनत्व।
धिष्ठानस्यविषयत्वमपिगौरवात्॰ नचविषयत्वंविनाधिष्ठानस्याव्यवधानेनप्रकाशमानत्वमेवनदृष्टमितिवाच्यम्॰ यथाधिष्ठानस्यापरोक्षत्वंपरमतेक्व
चिन्मनसाक्वचिन्नेत्राभ्यांतथास्मन्मते स्वतोपीत्यत्रबाधकाभावात्॰ ननुस्वतोऽपरोक्षेकस्याध्यासोदृष्टइतिचेदज्ञानशोकमोहस्वप्नादेरितिगृहा
णतथाच परैर्यथाक्षिगस्येशुक्तिकादौरजतादिविभ्रमःस्वीकृतस्तथास्वतोऽपरोक्षआत्मन्यहंकारादिविभ्रमेपिनास्तिबाधकम्॰। ननुस्व
यंप्रकाशस्यात्मनोज्ञातांशासंभवात्॰ कथमधिष्ठानतेति चेदुच्यतेदूरस्थयोर्वृक्षयोर्वृक्षत्वेनप्रतीयमानयोरपितावन्मात्रस्वरूपो॥
भेदोनज्ञायते ॥० इत्यंगीकार्यम् अन्यथाऽभेदभ्रांत्यनुदयापातादेवंज्ञातेप्यात्मन्यज्ञातत्वसंभवात्तस्याधिष्ठानत्वमुदयापाता।
दवज्ञातेप्यात्मन्यज्ञातत्वसंभवात्तस्याधिष्ठानत्वमुपपद्यते भेदोहिवस्तुनःस्वरूपंनधर्मः अन्योन्याश्रयापातादि
त्यन्यत्रविस्तरः॥ ॥ श्रीरामचंद्राय॰ ॥ ॥
ॐनमःशिवाय॰॥ इति श्री

उक्तमर्थमन्यत्राप्यतिदिशति एवमिति प्रत्यक्षप्रमांतरेष्वपीतः शंखश्वेतोगुड इत्यादिषु प्रत्यक्षसामान्यलक्षणं चित्त्वं प्रमाण चैतन्यस्यावाधितयोग्य वर्तमान
विषयविच्छिन्न चैतन्याभिन्नत्वं यथार्थप्रत्यक्षलक्षणं च उक्तं प्रत्यक्षं पुनर्विभजते उक्तमितितथा चेन्द्रियजन्यमित्यत्रेन्द्रियशब्देनज्ञानेन्द्रियाणि पंच गृह्यं।
तेन तु नैयायिकवत् षड्नापिदशकर्मेन्द्रियाणां ज्ञानाजनकत्वादित्याशयेनाह इन्द्रियाणि पंचेति· तान्यपिकानीत्यपेक्षायामाह घ्राणेति तत्सद्भावे चरूपादिज्ञा॥
नानि सकरणकानि क्रियात्वाच्छिदिक्रियावदित्यनुमानं प्राणमनूक्रा मंतं सर्वप्राणाश्चनूक्रामंतीत्याद्याश्रुतिश्च मानं इन्द्रियाण्यप्राप्यकारीणीति सौगतात्॥
स्तान्निराकर्तुमाह· सर्वाणि चेति· तत्रापिफलबलकल्प्यं स्वभावविशेषमाश्रित्याह तत्रेति· ननु चक्षुषस्तत्संभवेपि कर्णशष्कुल्यवच्छिन्ननभोरूपश्रोत्रस्य।

एवं प्रत्यक्षप्रमांतरेष्वपि प्रत्यक्षसामान्यलक्षणानुगमो यथार्थप्रत्यक्षलक्षणासद्भावश्च दर्शनीयः उक्तप्रत्यक्षं प्रकारांतरेण द्विविधं इं।०
द्रियजन्यं तदजन्यं चेति· तत्रेन्द्रियाजन्यं सुखादिप्रत्यक्षं मनस इन्द्रियत्वानिराकारणात् इन्द्रियाणि पंच घ्राणरसनाचक्षुः श्रोत्रत्वगात्म॥
कानि सर्वाणि चेंद्रियाणि स्वस्वविषयसंयुक्तान्येव प्रत्यक्षज्ञानं जनयंति· तत्र घ्राणरसनत्वगिन्द्रियाणि स्वस्थानस्थितान्येव गंधरसस्पर्शोपलं
भान् जनयंति चक्षुः श्रोत्रे तु स्वत एव विषयदेशं गत्वा स्वस्वविषयं गृह्णीतः श्रोत्रस्यापि चक्षुरादिवत् परिच्छिन्नतया भार्यादिदेशगमन
संभवात् अत एवानुभवो भेरीशब्दो मया श्रुत इति· वीचीतरंगादि [illegible] न्यायेन कर्णशष्कुलीप्रदेशोत्पन्नः शब्दो गृह्यत इति कल्पनागौरवम् भेरी
शब्दो मया श्रुत इति प्रत्यक्षस्य भ्रमत्वकल्पनागौरवं च स्यात् तदेवं व्याख्यातं प्रत्यक्षम् ॥॥ इति प्रत्यक्षं प्रमाणम् ॥ ७ ७ ७ ७ ७।

विषयदेशगमनं न संभवति इत्याशंक्याह श्रोत्रस्यापीति· आकाशादुत्पन्नं श्रोत्रमपि चक्षुरादिवत्परिच्छिन्नमिति भावः यतः श्रोत्रस्य शब्ददेशगमनमत एव नै
यायिकप्रक्रिया तु गौरवग्रस्तत्वादुपेक्ष्येत्याह· वीचीति· यथा वीचेस्तरंगस्ततोपि वीच्यंतरं ततोपितरंगांतरमिति न्यायवत् भेरीदंडसंयोगान्नभस्युत्पन्ना ——— च्छ
ब्दात्समवायिकारणाच्छब्दांतरस्योत्पत्तिस्ततोन्यस्येति परंपरया त्यशब्दस्य श्रोत्रसंबंधकल्पनागौरवं कदंबमुकुलन्याय आदिपदाद्ग्राह्यः प्रदेशे प्रदेशे सर्वथा।
र्थः परमप्रकृतमुपसंहरति· तदेवमिति॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य वालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसू ॥॥॥॥
॥॥नु धनपतिसूरिसुतशिवदत्तविरचितायां वेदान्तपरिभाषार्थदीपिकायां प्रत्यक्षपरिच्छेदः समाप्तः॥ शुभम् ॥॥॥॥ अवतंसेनामभूषणम्॥ २॥

अनुमिति॥४॥व्याप्तिज्ञानत्वारूपस्यावच्छेदकस्यसत्वात्॰॥५॥टिपणि॥ ॥ ॥ ॥

॥श्रीगणेशायनमः॥ एवंसर्ववादिसंमतंज्येष्ठंप्रत्यक्षप्रमाणंप्रथमंनिरूप्यबहुवादिसंमतत्वात्तदनंतरं अनुमाननिरूपणप्रतिजानीते· अनुमीयतेअनेनेत्यनु॥ मानं अनुमितिकरणमिति· व्युत्पन्नमनुमानपदंलक्षणमव्युत्पन्नंलक्ष्यमित्याशयेनानु मानंलक्षयति अनुमितीति अनुमानलक्षणघटकानुमितेर्लक्षणमाह अनुमितिश्चेति व्याप्तिज्ञानत्वेननतुविषयत्वादिना व्याप्तिश्चवक्ष्यमाणात्ज्ञानंचव्यभिचारज्ञानविरोधिज्ञानमितिपर्य्यवस्यति नन्वत्रव्याप्तिपदंव्य॥ भिचारज्ञानविरोधिपरंनतुग्रंथकृदभिमतव्याप्तिपरंतेनतज्जनकेत्यंतनाभावगर्भसाध्याभाववद्वृत्तित्वादिरूपव्याप्तिज्ञानेऽन्योन्याभावगर्भसाध्यवदन्यवृत्ति॥ योगिकान्योन्याभावासामानाधिकरण्यादिरूपव्याप्तिज्ञानंचकारणतावच्छेदककत्वादनुमितिर्भवतिइदानींतुनस्यादितिचेन्न अत्यंताभावादिगर्भ॥ व्याप्तिज्ञानस्यापि व्यभिचारज्ञानविरोधिज्ञानएवपर्यवसानात् वस्तुतोव्यतिरेकव्याप्तिज्ञानस्यानुमित्यहेतुत्वस्यवक्ष्यमाणत्वाच्चतादृशावच्छेदका॥

अथानुमानंनिरूप्यते अनुमितिकरणमनुमानं॥ अनुमितिश्चव्याप्तिज्ञानत्वेनव्याप्तिज्ञानजन्या॥ ॥
व्याप्तिज्ञानानुव्यवसायादेस्तत्वेनतज्जन्यत्वाभावान्नानुमितित्वं· अनुमितिकरणंचव्याप्तिज्ञानं॥ ॥

विवक्षायाः फलंमावेदयति· व्याप्तिज्ञानेति· तत्वेन व्याप्तिज्ञानत्वेन· आदिपदंतज्जन्यस्मृतिशाब्दज्ञानादिसंग्रहार्थं· अनुव्यवसायस्मृतिशाब्दज्ञानादि॥ षुविषयत्वस्वसमानविषयानुभवत्वपदार्थज्ञानत्वादिनाहेतुत्वात्तत्वेनाहेतुत्वमित्यर्थः ननुव्याप्तिज्ञानस्यकिमनुमिति· जनकत्वमात्रमुततत्करणत्वमित्यपेक्षा॥ यामाह· अनुमितिकरणंचेति· एतेनव्याप्तिविशिष्टपक्षधर्म्मताज्ञानजन्यंज्ञानमनुमिति· तत्करणमनुमानंतच्चलिंगपरामर्शइतिप्रत्युक्तम् व्याप्तिज्ञा॥ नस्यैवतत्करणत्वसंभवेनतदतिरिक्तपरामर्शांगीकारस्यानौचित्यात्· नाप्यनुमितौलिंगंकरणम् योग्यलिंगकानुमितौपरामर्शस्यव्यापारत्वासंभवेनतत ॥ त्करणत्वासंभवतयाव्यभिचारात् तस्मादनुमितिकरणत्वाद्व्याप्तिज्ञानमेवानुमानशब्दाभिधेयंनतुलिंगतत् परामर्शावितिभावः॥ ॥ ॥ ॥ ॥ ॥

॥धूम ४॥४॥प्रतियोगितावच्छेदकं घटत्वादिकंतदवच्छिन्नंघटादिकंतद्भिन्नवह्निरूपंसाध्यम् ४॥ ॥४॥ वह्निनासमं ॥४॥४॥धूमस्य ४॥अन्वयव्यतिरेकरहितस्य ॥ ६॥ ॥ ॥
ननुव्याप्तिज्ञानस्यकरणत्वेतद्व्यापारोवक्तव्यः व्यापारवदसाधारणकारणस्यकरणंत्वादित्यपेक्षायामाह तत्सं स्कारइति व्याप्तिज्ञानसंस्कारइत्यर्थः ननुमहा
नसादौधूमादिज्ञानंप्रथमंपक्षेततोद्वितीयंततोव्याप्तिस्मृत्वापक्षेधूमादिपरामर्शात्मकंतृतीयंततोवह्न्याद्यनुमितिरितितृतीयलिंगपरामर्शात्मकज्ञानमनुमि
तिकरणमितिवदन्तिनैयायिकाः अतोभवद्भिरपितथैवकिमिति नाभ्युपगम्यतेइत्याशंक्याह ननुतृतीयेति व्याप्तिविशिष्टपक्षधर्मताज्ञानंपरामर्शः प्रतियोग्यस
मानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नंयन्नभवति तेनसमंतस्यसामानाधिकरण्यंव्याप्तिव्याप्यस्यपक्षवृत्तित्वंपक्षध
र्मता तथाचवह्निव्याप्यधूमवानयमित्यादिज्ञानमुक्तलक्षणपरामर्शात्मकंतत्तुनानुमितिकरणमित्यर्थः तत्रहेतुमाह तस्यानुमितीति पक्षधर्मताज्ञान
द्वारोद्बुद्धसंस्कारस्करेव्याप्तिज्ञानस्यान्वयव्यतिरेकाभ्यामनुमितिजनकत्वात्तुपरामर्शस्यावश्यकतयानैद्रहितस्यपरामर्शस्यतद्धेतुत्वासिद्ध्यातत्करणत्व॥०॥
॥ तत्संस्कारोऽवान्तरव्यापारःमनुतत्तृतीयलिंगपरामर्शोऽनुमितौकरणंतस्यानुमितिहेतुत्वासिद्ध्यातत्करणत्वस्यदुरनिरस्तत्वा
त् नचसंस्कारजन्यत्वेनानुमितिः स्मृतित्वापत्तिः स्मृतिप्रागभावजन्यत्वस्यसंस्कारमात्रजन्यत्वस्यवास्मृतित्वप्रयोजकतयासंस्का
रध्वंस। साधारणसंस्कारजन्यत्वस्यप्रयोजकत्वात् नचयत्रव्याप्तिस्मरणादनुमितिस्तत्रकथंसंस्कारोहेतुरितिवाच्यम् व्याप्ति
22 स्मृतिस्थलेपितत्संस्कारस्यैवानुमितिहेतुत्वात् नहिस्मृतेःसंस्कारनाशकत्वनियमःस्मृतिधारादर्शनात् नचानुद्बुद्धसंस्का
राद्प्यनुमित्यापत्तिः तदुद्बोधस्यापिसहकारित्वात्०॥ स्यदुरनिरस्यत्वमित्यर्थः उपलक्षणमिदंअनुमितिकरणंलिंगतत्परामर्शोवान्तरे
व्यापारइतिवैशेषिकामन्वते तन्नसाधुविनष्टस्यानागतस्यचलिंगस्यतदानीमभावेनततोनुमित्यनापत्तेरित्यपिद्रष्टव्यम् ननुसंस्कारजन्यज्ञानंहिस्मृ॥
तिरितिस्मृतिलक्षणंतस्यचानुमित्यावप्यनुगमात्तस्यापिस्मृतित्वापत्तिरित्याशंक्यपरिहरतिनचेति तत्रहेतुमाह स्मृतीति नन्वेवंतर्हि तत्तत्प्रागभावज
न्यत्वरूपयोजकस्यसर्वत्रसुलभात् ॥तत्रतत्रप्रयोजकान्तराभ्युपगमोनर्थकः स्यादित्यरुचेः पक्षान्तरमाह संस्कारमात्रेति ननुव्याप्तिस्मरणादनुमि
तिस्थलेसंस्कारजन्यत्वेव्यभिचरितंव्याप्तिस्मृत्यासंस्कारनाशादित्याशंक्यपरिहरति नचेति व्याप्तिस्मृतिजन्यानुमितिस्थलेपिसंस्कारनाशानभ्युप
गमेनव्यभिचाराभावादित्याह व्याप्तिस्मृतीति स्मृतिधारादर्शनात्स्मृतेःसंस्कारनाशकत्वनियमोनास्तीत्याह ॥ ॥ टिपणि॥ अनुमित्यात्मकज्ञानस्यापि॥४॥

वे॰प॰
टी॰टी॰
२२

नहीति॰ ननु संस्कारस्यैवानुमितिहेतुत्वेनुद्बुद्धादपि तस्मादनुमितिप्रसंग इत्याशंक्य परिहरति॰ न चेति॰ तदुद्बोधस्य पक्षधर्मताज्ञानजन्यस्य संस्कारोद्बोधस्य फलितमाह॰ एवं चेति॰ व्याप्तिज्ञानस्य करणत्वे व्याप्तिज्ञानसंस्कारस्य तद्व्यापारत्वे पक्षधर्मताज्ञानजन्यसंस्कारोद्बोधस्य सहकारित्वे च सिद्धे सति पर्वतो वह्निमानित्येकमेव ज्ञानमनुमित्यात्मकमितियेऽभिमन्यंते तेतान्निराकर्तुमाह न चेति॰ सन्निकृष्टपक्षकानुमितिस्थले ज्ञानद्वयस्योपपादितत्वादित्याह पर्वतमिति पर्वतं पश्यामि वह्निमनुमिनोमीत्यनुभवबलाज्ज्ञानद्वयस्यावश्यकतया जातित्वोपाधित्वपरिभाषायाश्चाप्रामाणिकत्वात्॰ ज्ञानस्यांशभेदेन परोक्षत्वापरोक्षत्वाभ्युपगमस्य चानुभवविरुद्धत्वादिति भावः ॥ अंशे

जनितः १॥

एवं चायं धूमवानिति पक्षधर्मताज्ञानेन धूमो वह्निव्याप्य इत्यनुभवाहितेन संस्कारोद्बोधे च सति वह्निमानित्यनुमितिर्भवति॰ ननु मध्ये व्याप्तिस्मरणं तज्जन्यवह्निव्याप्यधूमवानित्यादिविशेषणविशिष्टज्ञानं वा हेतुत्वेन कल्पनीयं गौरवात् मानाभावाच्च तत्र व्याप्तिज्ञानं वह्निविषयकज्ञानांश एव करणं न तु पर्वतविषयकज्ञानांश इति॰ पर्वतो वह्निमानिति ज्ञानस्य वह्न्यंश एवानुमितित्वं न पर्वतांशे तदंशे प्रत्यक्षत्वस्योपपादितत्वात्॰ व्याप्तिश्चाशेषसाधनाश्रयाश्रित साध्यसामानाधिकरण्यरूपा॥ ॥ ॐ नमः शिवाय॰ इति॰ ॥

क्षत्वयोरुपपादितत्वादित्यर्थः नन्वनुमिति करणव्याप्तिज्ञाने का व्याप्तिरित्यपेक्षायां व्याप्तिस्वरूपमाह॰ व्याप्तिश्चेति अशेषं तत्साधनं च तस्याश्रयस्तदाश्रि तं यत्साध्यं तेन समं हेतोः सामानाधिकरण्यं रूपं यस्याः सा साधनतावच्छेदकावच्छिन्नसाधनाश्रयाश्रिता साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधि-
करण्यरूपेति यावत् एवं च यत्किंचिद्वह्न्यादिसाधनाश्रयाश्रितयत्किंचिद्धूमादिसाध्यमानाधिकरण्यमादाय पर्वतो धूमवान् वह्नेरित्यादावसद्धेतौ नातिव्याप्तिरिति सूचितम्
स्तीकृते॥ ३॥ पं॥

राम
२२

नन्वेवंभूता व्याप्तिः केन गृह्यते तेन तावत् तर्केण व्याप्यारोपेण व्यापकारोपरूपस्य तस्य व्याप्त्यधीनत्वात् नापि सहचारदर्शनेन सकृद्दर्शने भूयोदर्शने च तस्मिन् क्वचिद्व्य
भिचारोपलंभादित्याशंक्याह साचेति तच्च सकृद्दर्शने भूयोदर्शने वाऽनपेक्षायामाह तच्चेति गृहीतसहचारस्य व्याप्तिग्रहदर्शनाच्चेत्यन्वयव्यतिरेकाभ्यां सहचा
रदर्शनस्य हेतुत्वासिद्धालाघवात् तस्यैव प्रयोजकत्वं न तु तद्विशेषस्येत्याह सहचारेति एवं व्याप्तिज्ञानस्यानुमितिकरणत्वेनानुमानत्वं प्रसाध्येदानीमनुमा
नत्रैविध्यमपि नैयायिकादिवदस्मन्मते नास्तीत्याशयेनाह तच्चानुमानमिति ननु केवलान्वयि केवलव्यतिरेकान्वयव्यतिरेकिभेदात्त्रिविधमित्यर्थः॥ अन्व
यसुखव्याप्तिज्ञानरूपं न तु परोक्तभेदानां जागरूकत्वे कथमनुमानस्यैकरूपत्वमित्याशंक्याद्य भेदं निराचष्टे नत्विति तदत्यन्ताभावाप्रतियोगिसाध्यकमन्तचा

सा च व्यभिचारादर्शने सति सहचारदर्शनेन गृह्यते तच्च सहचारदर्शनं भूयोदर्शनं सकृद्दर्शनं वेति विशेषो नादरणीयः सहचारदर्शन
स्यैव प्रयोजकत्वात् तच्चानुमानमन्वयिरूपमेकमेव न तु केवलान्वयि सर्वस्यापि धर्मस्यास्मन्मते ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वेनात्यन्ताभा
वाप्रतियोगिसाध्यकत्वरूपकेवलान्वयित्वस्यासिद्धेः नाप्यनुमानस्य व्यतिरेकिरूपत्वं साध्याभावे साधनाभावनिरूपितव्याप्तिज्ञानं॥
४३ स्साधनेन साध्यानुमितावनुपयोगात् कथं तर्हि धूमादावन्वयव्याप्तिमविदुषोपि व्यतिरेकव्याप्तिज्ञानादनुमिति अर्थापत्तिप्रमा
णादिति वक्ष्यामः अत एवानुमानस्य नान्वयव्यतिरेकिरूपत्वं व्यतिरेकव्याप्तिज्ञानस्यानुमित्यहेतुत्वात्॥

॥ः१ स्मन्मते ब्रह्मातिरिक्तं किंचिद॥
स्यत्यन्ताभावाप्रतियोगि नेह नानास्ति किंचनेत्यादिश्रुत्या सर्वस्यापि ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वावधारणादिति तथाभूतकेवलान्वयित्वस्यासिद्धेरित्याह सर्वे
स्यापीति एवं प्रथमभेदं निराकृत्य केवलव्यतिरेकिरूपं द्वितीयभेदं निराचष्टे नाप्यनुमानस्येति व्यतिरेकिरूपत्वं केवलव्यतिरेकिरूपत्वं साधनेन हि॥
साध्यमनुमीयते न तत्र च साध्यसाधनयोर्व्याप्तिज्ञानमुपप्रयुज्यते न तु साध्याभावसाधनाभावयोरित्याह साध्याभाव इति तथा च पृथिवी इतरेभ्यो भिद्य
ते गंधवत्त्वात् —— यदितरेभ्यो न भिद्यते न तद्गंधवद्यथा जलादीत्याद्युदाहरणानि त्वर्थापत्तेर्गंधवत्त्वस्येतरभेदोपपादकत्वादिति भावः नन्वयव्याप्तिज्ञान
रहितस्य व्यतिरेकव्याप्तिज्ञानादनुमितिर्भवति भवन्मते सा कथमुपपद्यते इति शंकते कथं तर्हीति तस्यार्थापत्तिप्रमाणाद्व्याप्तिज्ञानं न त्वनुमानात् तो नोक्त

॥ ॐ ॥ ॐ ॥ ॐ ॥ स्वात्यन्ताभावसमानाधिकरणत्वमव्याप्यवृत्तित्वम् ६ ॥ इतराप्रकाशत्वे सति प्रकाशत्वत्वं स्वप्रकाशत्वं तेन स्वप्रकाशत्वेन ॥ ७ ॥ घट ३ ॥ टिप्पणिम् ॥
अर्थापत्तीति· वक्ष्यमाणरीत्या अर्थापत्तिप्रमाणस्यावश्यकतया व्यतिरेक्यनुमानस्य तदन्तर्भावसंभवे तत्पृथक्त्वस्याभ्युपगमो न युक्त इति भावः तृतीयभेदं
निराकरोति अत एवेति· यतो व्यतिरेकव्याप्तिज्ञानस्य नानुमितिजनकत्वमत एवेत्यर्थः अन्वयव्यतिरेकिरूपेऽप्यन्वयव्याप्तिज्ञानस्यैवानुमितिजनकत्वे।
व्यतिरेकव्याप्तिज्ञानस्य तज्जनकत्वाभ्युपगमस्य वैयर्थ्यादित्याह व्यतिरेकेति· अत्र केचित् स्ववृत्तिविरोधिवृत्तिमदत्यन्ताभावाप्रतियोगित्वम् साध्य।
स्य केवलान्वयित्वं तत्साध्यकत्वं केवलान्वयिलिंगलक्षणं प्रमेयत्वादेश्च स्वसमानाधिकरणपारमार्थिकत्वावच्छिन्नात्यन्ताभावप्रतियोगित्वेपि स्ववृ
त्तिविरोधिवृत्तिमदत्यन्ताभावाप्रतियोगित्वात्केवलान्वयित्वं न च श्रुतिविरोधः शंकनीयस्तस्या अपि पारमार्थिकत्वावच्छिन्नद्वैताभावपरत्वात् तदुक्तं वि
वरणे आगमेन च द्वैतस्य तत्त्वांशबाधादिति ॥ न च लक्षणे स्ववृत्तिविरोधीति· व्यर्थं तस्याव्याप्यवृत्तिकपिसंयोगात्यन्ताभावादिसंग्रहार्थत्वात् न च
ब्रह्मणः स्वप्रकाशत्वेन तत्र स्वरूपेणापि· प्रमेयत्वाभावात्कथं केवलान्वयित्वमिति वाच्यम्· ब्रह्मणोपि वृत्तिलक्षणप्रमाविषयत्वात् न चैतावता स्व
प्रकाशत्वविरोधः अनुपहितस्यैव तथात्वात् न चैवमपि नामिधेयत्वकेवलान्वयि ब्रह्मणो नभिधेयत्वादिति वाच्यम्· ब्रह्मणो लक्ष्यतया वाच्यत्वाभावे
पि पदजन्यज्ञानविषयत्वाद् वाच्यत्वस्यापि ग्रंथकृता वक्ष्यमाणत्वाच्च· न चैवं प्रमेयत्वादिविरोधिवृत्तिमदत्यन्ताभावस्याप्रसिद्धत्वात् तत्र लक्षणाव्याप्तिः
स्ववृत्ति· विरोधिवृत्तिमदत्यन्ताभावप्रतियोगिनो घटादयः प्रसिद्धास्तदन्यत्वस्य प्रमेयत्वादावपि सत्वात् एवं धूमादावन्वयव्याप्तिमविदुषोपि व्यतिरे
कव्याप्तिज्ञानाद्वह्निज्ञानमित्यविवादम् ॥ तच्चानुमितिरेव वह्निमनुमिनोमीत्यनुव्यवसायात् न च क्लृप्तकारणव्याप्तिज्ञानस्याभावात् कथमनुमितिरित्यु
क्तमिति वाच्यम्· व्यतिरेकव्याप्तिज्ञानस्य सत्वात् ॥ न चैतदनुमित्यकरणमिति वाच्यम्· स्वव्यभिचारधीविरोधिविषयव्याप्तिज्ञानव्याप्तिज्ञानस्यानु
मितिहेतुत्वात् अस्य च व्यतिरेकव्याप्तिज्ञानसाधारणत्वात् नन्वनुमानस्य व्यतिरेकितयापि प्रामाण्याभ्युपगमेन तत्रैवार्थापत्तेरन्तर्भावापत्तौ सा पृ
थक्प्रमाणमिति राद्धान्तो भज्येतेति चेन्न हि अनुमानस्य प्रामाण्ये संशयाद्युत्तरप्रत्यक्ष स्थले चक्षुरादेः प्रामाण्यं न स्यात्तत्रानुमितिसामग्रीसत्वेनानुमिते

तथा शाब्दस्थलेपि शब्दो न प्रमाणं स्यात् एते पदार्था मिथः संसर्गवन्तः आकांक्षादिमत्पदकदम्बस्मारितत्वादित्यनुमानेनैव तत्प्रमा
णाभावेन तात्पर्यविषयसंसर्गप्रतीतेः संभवात् यदि स्यात्पुनः साक्षात्करोमि शब्दादनुमिनोमि ज्ञानामीत्यनुव्यवसायात्प्रत्यक्षशब्दयोः पृथक्प्रमाण्यं तदा व्यतिरे
कव्याप्तिज्ञानादिघटिकायामनुमितिसामग्र्यां सत्यामपि वह्निज्ञानानन्तरं धूमेन वह्निं कल्पयामीति यदानुव्यवसायः तदा धूमस्यार्थापत्तिविषयाप्रा
माण्यमिति तुल्यं यद्यानिरुपाधिव्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते इति व्यतिरेकिण्यप्यनन्वयव्याप्तिज्ञानमेवानुमितिहेतुः न चैवं सत्यन्वयव्य
तिरेकिणो भेदो न स्यादिति वाच्यम् व्यतिरेकसहचारमात्रज्ञानजन्यान्वयव्याप्तिधीर्यत्रानुमितिहेतुः स व्यतिरेकीति यत्रान्वयसहचारमात्रज्ञानजन्या
न्वयव्याप्तिधीरनुमितिहेतुः सोन्वयी यत्रोभयसहचारज्ञानजन्यान्वयव्याप्तिधीरनुमितिहेतुः सोन्वयव्यतिरेकीति विभागोपपत्तेः अस्मिंश्च पक्षे पदान्वय
सहचारेणैवान्वयव्याप्तिस्फुरणं तदा धूमस्यान्वयितया गमकत्वम् यदा व्यतिरेकसहचारेणैवान्वयव्याप्तिस्फुरणम् तदा व्यतिरेकितया यदान्वयव्यतिरेक
सहचारेणान्वयव्याप्तिस्फुरणं तदान्वयव्यतिरेकि यदा व्यतिरेकसहचारेण व्यतिरेकव्याप्तेरेव ज्ञानं यदार्थापत्तिविषया धूमस्य प्रामाण्यं न च व्यति
रेक्यनुमानस्य पृथक्प्रमाणत्वेऽपसिद्धान्तः । मूलग्रन्थेषु शुक्तिरूप्यमिथ्यात्वादौ तत्र तत्र व्यतिरेक्यनुमानस्यापि प्रमाणत्वेनोपन्यासात् स्मात्त्रिविध
मेवानुमानमिति युक्तमिति वदन्ति तत्रेदं वक्तव्यम् ० तावद्वेदोपनिषन्मतेऽनुमानस्य केवलान्वयित्वं संभवति सर्वस्यापि प्रपंचस्य ब्रह्मनिष्ठात्य
न्ताभावप्रतियोगित्वाभिधानात् ब्रह्मणि प्रपंचात्यन्ताभावो व्यावहारिक इति पक्षेरव वृत्तिविरोधिवृत्तिमदत्यन्ताभावप्रतियोगित्वप्रमेयत्वादेरायाति
न तु तदप्रतियोगित्वं नन्वेवं तर्हि निषेधस्य वाध्यत्वेन पारमार्थिकसत्त्वाविरोधित्वादद्वैतक्षतिरिति चेन्न ॥ स्वप्नार्थस्य स्वाप्ननिषेधेन वाध्येनापि वाध
दर्शनात् न च निषेधस्य वाध्यत्वं पारमार्थिकसत्त्वाविरोधित्वे तन्त्रं किंतु निषेध्यापेक्षयान्यूनसत्ताकत्वं प्रकृते च तुल्यसत्ताकत्वाद्विरोधित्वमविरु
द्धं तत्र हि निषेधस्य निषेधे प्रतियोगिसत्त्वमायाति यत्र निषेधस्य निषेधबुद्ध्या प्रतियोगिसत्त्वं ० ॥ व्यवस्थाप्यते निषेधमात्रं तु निषेध्यते यथा ॥

यत्र धूमस्तत्राग्निरित्यन्वयसहचारेण वह्निव्याप्यो धूम इत्यन्वयव्याप्तिस्फुरणमित्यर्थः ॥ ० ॥ ० ॥ ० ॥ ॥ निरुक्तोभयसहचारेण निरुक्तान्वयव्याप्तिस्फुरणं यदा ॥ः
यत्र वह्निर्नास्ति तत्र धूमोपि नास्तीति व्यतिरेकसहचारेण वह्निव्याप्यो धूम इत्यन्वयव्याप्तिस्फुरणमित्यर्थः ॥ ८ ॥) दान्वयव्यतिरेकीति भावः ॥ ७ ॥ टीपणि पं ७ की श्री ० ८ ॥

वे.प. रजतेनेदं रजतमिति प्रतीत्यनंतरमिदं नारजतमिति ज्ञानेन रजतं व्यवस्थाप्यते तन्निषेधमात्रं तु निषिध्यते तत्र प्रतियोगिनिषेधयोरुभयोरपि निषेधस्य
टी.दी. त्रप्रतियोगिसत्त्वम्।। यथा ध्वंससमये प्रागभावप्रतियोगिनोरुभयोर्निषेधः तथा च प्रकृतेपि निषेधस्य बाध्यत्वेपि प्रपंचस्य न तात्त्विकत्वं निषेधबाध
२४ केन प्रतियोगिनः प्रपंचस्य तन्निषेधस्य च बाधनात् उभयोरपि निषेध्यतावच्छेदकस्य दृश्यत्वादेस्तुल्यत्वात् न चानात्त्विकनिषेधबोधकत्वाच्छ्रुतेरप्रा
माण्यशंका ब्रह्मभिन्नस्यातात्त्विकत्वं बोधयतः शास्त्रस्याप्रामाण्यायोगात् एतन्निषेधप्रतियोगित्वं च स्वरूपेणैव न तु सद्विलक्षणं स्वरूपानुपमर्दिनं पा
रमार्थिकत्वाकारेण स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वस्य प्रपंचे शुक्तिरजतादौ चाभ्युपगमात् रजतभ्रमानंतरमधिष्ठानसाक्षात्कारे रजतस्य
रजतं नास्ति नासीत् न भविष्यतीति स्वरूपेणैव नेह नानेति श्रुत्या च प्रपंचस्य स्वरूपेणैव निषेधप्रतीतेः।। न च तत्र लौकिकपारमार्थिकरजतमेव
स्वरूपेण निषेधप्रतियोगीति वाच्यम् भ्रमबाधयोर्वैयधिकरण्यापत्तेः अप्रसक्तप्रतिषेधापत्तेश्च।। न चैवं विवरणाचार्यवाक्यविरोध इति वाच्य
म् तस्य पक्षांतरत्वात्।। अन्यथा बाध्यत्वरूपपारमार्थिकत्वस्य बाध्यत्वरूपमिथ्यात्वनिरूप्यत्वेनान्योन्याश्रयापातात् किंच नात्र रजतमिति प्रती
तौ यथा रजतस्य स्वरूपेण पारमार्थिकत्वेन च निषेधो विषयस्तथा नेह नानास्ति किंचनेत्यत्रापि प्रपंचस्य स्वरूपेण पारमार्थिकत्वेन च निषेधो
विषयः विभक्त्यन्तोपस्थापिते धर्मिणि प्रतियोगिनि च नञः संसर्गाभावबोधकत्वनियमस्य व्युत्पत्तिसिद्धत्वात् अस्तु वा पारमार्थिकत्वाकारेणैव
निषेधस्तथापि प्रमेयत्वादेर्ब्रह्मरूपधर्मिन्यूनसत्ताकत्वे कथं केवलान्वयित्वं तत्त्वे च समसत्ताकत्वावश्यंभावात् कथं बाध्यत्वं तस्माद्ब्रह्मातिरिक्तस हरि
र्वं मिथ्येति वादिनः केषांचिद्धर्माणां केवलान्वयित्वकथनं केवलसाहसविजृंभितं एतेन ब्रह्मणि अभिधेयत्वस्थापनमपि निरस्तम्।। यद्वाचानभ्यु
दितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि अविज्ञातं विजानतां प्रतिबोधविदितं मतमित्यादिश्रुत्या ब्रह्मणि वाच्यत्वादेर्निषिद्धत्वात्।। न च ग्रंथकृता तत्र वाच्य राम
त्वं वक्ष्यमाणमिति भ्रमितव्यं लक्षणां विना शक्त्यापि महावाक्येनाखंडार्थो बोधयितुं शक्यते इत्येतत्परो तरंग्रंथस्य ब्रह्मणि वाच्यत्वमस्तीत्येतत्कथन २४

व्यत्यतिश्वात्रानुभवः।।५।।अविचारविल — सितमित्यर्थः३।।अनुपदं वक्ष्यमाणहेतुना३।। बोधशब्देन बोद्धुः प्रत्यया उच्यंते सर्वप्रत्यया विषया भवंति।।
सतीति शेषः ६।।टीपन् यस्सतत थासर्वप्रत्ययदर्शीत्यर्थः २।।टि०२की०।।

॥व्यतिरेक्यनुमानवादिनां अर्थापतिव्यतिरेक्यनुमानयोः ॥२॥व्यतिरेकव्याप्तेः १॥

भावात्॥यदपिव्यतिरेक्यनुमानोपपादनंतदप्यसंगतम् अर्थापतिवादिनांतदावश्यकत्वेतद्वादिनामर्थापतेरावश्यकत्वापत्तेः यत्तुप्रत्यक्षशब्दयोर्यथापृथ
क्प्रामाण्यंतथार्थापत्तेरपीत्यादितदपिनव्यतिरेकव्याप्तेरेवार्थापत्तेः ॥प्रमाणत्वेनद्वयोःसामग्रीभेदाभावेनवैषम्यात् तथाच व्यतिरेकव्याप्तिज्ञानेयत्रवह्न्या
दिज्ञानंतत्रवह्निंकल्पयामि इत्याकारकानुव्यवसायोपलंभात् तत्करणमर्थापत्तिरेवनत्वनुमानंतस्यानुमित्यहेतुत्वात् यत्तुव्यतिरेकसहचारमात्रज्ञानजं॥
न्यान्वयव्याप्तिधीर्यत्रानुमितिहेतुःसव्यतिरेकीत्यादितदपिन अन्वयसहचारदर्शनस्यान्वयव्याप्तिज्ञानजनकतायाःव्यतिरेकसहचारदर्शनस्यस्यव्यतिरेक
व्याप्तिज्ञानजनकतायाःसर्वलोकानुभवसिद्धतयातद्विरुद्धकार्यकारणभाववर्णनानौचित्यात्तथाचनास्त्यर्थापत्तिव्यतिरिक्तंव्यतिरेक्यनुमान एतेनतं
स्यान्वयव्यतिरेकित्रिरूपत्वमपिप्रत्युक्तम् तस्मादनुमानमन्वयिरूपमेकमेवेति सुष्ठुक्तं मूलकृद्भिरन्यथापिसिद्धान्तायातःसांप्रदायिकग्रंथेषुकेवलान्वयि
॥तस्यानुमानस्य द्वैविध्यमाह ॥

॥तच्चानुमानंस्वार्थपरार्थभेदेनद्विविधम् तत्रस्वार्थन्तूक्तमेवपरार्थन्तुन्यायसाध्यं न्यायोनामावयवसमुदायः॥

केवलव्यतिरेक्यन्वयव्यतिरेक्यनुमानानांत्वप्यनुपपत्त्यास्तांत्कचित्प्रयोगस्तुपरमतानुसारेणद्रष्टव्य इत्यास्तांतावत्॥यथोक्तानुमानस्य प्रकारान्तरेण द्वैविध्यमा
28 ह॥तच्चेति तत्रद्विविधेस्वार्थंस्वविवादगोचरार्थसाधकं उक्तमेवव्यभिचारादर्शनेसतिसहचारदर्शनेनगृह्यतइत्युक्तातायानिरुक्तव्याप्तेर्ज्ञानमेवपरार्थंप
रविवादविषयार्थसाधकंन्यायसाध्यंन्यायप्रयोज्यंन्यायशब्दार्थमाह न्यायोनामेति वक्ष्यमाणावयव घटितवाक्यं अवयवसमुदायःतथाचेनुमान
प्रयोजकवाक्यार्थज्ञानजनकवाक्यत्वंन्यायत्वंतादृशन्यायजन्यज्ञानप्रयोजकंव्याप्तिज्ञानंपरार्थानुमानमित्यर्थः अवयवाश्चकतीत्यपेक्षायामाह।
अवयवाश्चेति॥साध्यतावच्छेदकावच्छिन्नसाध्यविषयताविलक्षणविषयताकबोधाजनकत्वेसति प्रकृतपक्षेप्रकृत साध्यबोधकजनकमा।
हावाक्यैकदेशत्वम् प्रतिज्ञावयवत्वम्॥यथापर्वतोवन्हिमानित्यादिस्साध्यतावच्छेदकावच्छिन्नसाध्यान्वितस्वार्थकतादृशैकदेशत्वंहेत्ववय।
हेतुवाक्यार्थकम्॥टीपन॥१॥

पंचम्याज्ञाप्यत्वे धूमज्ञानजन्यज्ञानविषयः १॥ उपनयनिगमनाभ्याम्॥५॥

वे·प· यर्थौ धूमवानित्यादि साधनवत्ताप्रयुक्तसाध्यवत्तानुभावकोक्तावयवत्वमुदाहरणावयवत्वं यथा यो यो धूमवान् स सोऽग्निमान् यथा महानस इत्यादि प्रकृतो
टी·दी· दाहरणोपदर्शितव्याप्तिविशिष्टपक्षबोधजनकन्यायैकदेशत्वमुपनयावयवत्वं यथा वह्निव्याप्यधूमवांश्चायं तथा चायमिति व्याप्तिविशिष्टत्वेन धर्मिहेतुरु
२५ ज्ञाप्यसाध्यविशिष्टपक्षबोधकन्यायैकदेशत्वं तादृशसाध्यबोधकन्यायैकदेशत्वं वा निगमनावयवत्वं यथा तस्मादग्निमानित्यादि ननु प्रतिज्ञाहेतूदा
हरणोपनयनिगमनरूपाः पंचावयवा इति वदतां नैयायिकानां हृत्याध्वरमीमांसकानां पक्षाभ्युपगमे को हेतुरित्यत आह अवयवत्रयेणैवेति तथा च
प्रथमपक्षे उपनयनिगमनकृत्यं हेतुप्रतिज्ञाभ्यां द्वितीयपक्षे हेतुप्रतिज्ञाकृत्यं ताभ्यां कर्तुं शक्यमनुमितावुपयोगित्वं न च सर्वावयवकृत्यमिति भावः निरू

अवयवाश्च त्रय एव प्रसिद्धाः प्रतिज्ञाहेतूदाहरणरूपाः उदाहरणोपनयनिगमनरूपा वा न तु पंचावयवरूपाः अवयवत्रयेणैव व्या
प्तिपक्षधर्मतयोरुपदर्शनसंभवेनाधिकावयवद्वयस्य व्यर्थत्वात् एवमनुमाने निरूपिते तस्माद्ब्रह्मभिन्ननिखिलप्रपंचस्य मि
थ्यात्वसिद्धिः तथाहि ब्रह्मभिन्नं सर्वं मिथ्या ब्रह्मभिन्नत्वात् यदेवं तदेवं यथा शुक्तिरूप्यं न च दृष्टान्तासिद्धिः तस्य साधितत्वात् न चाप्रयो
जकत्वं शुक्तिरूप्यरज्जुसर्पादीनां मिथ्यात्वे ब्रह्मभिन्नत्वस्यैव लाघवेन प्रयोजकत्वात्॥ पितानुमानत्वप्रकृते उपयोगमाह एवमिति तस्मा

दनुमानात्कीदृशं तदनुमानमित्यपेक्षायामाह तथाहीति पूर्वोक्तपक्षद्वये प्रथमपक्षोऽस्मत्संमत इति द्योतयितुं प्रतिज्ञाद्यवयवत्रयात्मकं वाक्यमाह॥ ब्रह्मेति
शुक्तिरूप्यादौ सिद्धसाधनवारणाय सर्वमिति ब्रह्मणि बाधनिरासाय ब्रह्मभिन्नमिति रज्जुसर्पादौ साध्यसिद्धावपि न सिद्धसाधनं नित्येवाङ्गनसे इत्य
त्रांशतस्सिद्धसाधनस्य परैरप्यङ्गीकृतत्वात् न च असिद्धो दृष्टान्तः तन्मिथ्यात्वे प्रमाणाभावात् अनुमानान्तरस्य तत्र प्रमाणत्वेऽनवस्थापातादित्याशंक्य
परिहरति तस्य दृष्टान्तस्य साधितत्वात् प्रत्यक्षपरिच्छेदे साधितत्वात् ननु इदमनुमानमप्रयोजकं सत्यत्वेऽपि ब्रह्मभिन्नत्वोपपत्तेरित्याशंक्य परिहरति॥ राम
न चेति॥ शुक्तिरजतादीनां मिथ्यात्वेनाविद्यातिरिक्तदोषजन्यत्वं प्रयोजकमपि तु ब्रह्मभिन्नत्वं लाघवात् तथा च लाघवरूपानुकूलतर्कसत्त्वान्नाप्रयोजकत्व २५
पक्षतावच्छेदकनानात्वाभावात् पक्षतावच्छेदकनानात्व एव तदभ्युपगमात्तस्य वा॥४पं·त्रुटि॥

ननु शुक्तिरूप्यादौ किं लक्षणं मिथ्यात्वं प्रत्यक्षसिद्धं यदनुमानेन प्रपंचे साध्यत इत्यपेक्षायां मिथ्यात्वलक्षणमाह मिथ्यात्वं चेति· स्वाश्रयत्वेनाभिमते या
वति स्थितोऽत्यंताभावस्तत्प्रतियोगित्वम् ननु स्वाश्रययावन्निष्ठात्यंताभावप्रतियोगित्वमित्येतावदेवास्त्वित्याशंक्याह अभिमतेति· यावति स्वा
श्रये स्वात्यंताभावासंभवस्तद्वारणाय तदावश्यकम् तथा च वस्तुतोऽस्वाश्रयेऽपि शुक्त्यादौ स्वाश्रयत्वेनाभिमते वर्तमानो योऽत्यंताभावस्तत्प्रतियोगित्वं शु
क्तिरूप्यादेरस्तीति न तस्यार्थक्यमिति भावः ननु एतावतैव निर्वाहे यावत् पदव्यर्थमित्यत आह यावदिति· तथा च यावत्यदाभावेऽकपिसंयोगाश्रयत्वेनाभिमते· वृ

मिथ्यात्वं च स्वाश्रयत्वेनाभिमत यावन्निष्ठात्यंताभावप्रतियोगित्वं अभिमतपदं वस्तुतः स्वाश्रयाप्रसिद्ध्या असंभववारणाय याव
त्पदसमर्थांतरवारणाय तदुक्तं सर्वेषामेव भावानां स्वाश्रयत्वेन सम्मते प्रतियोगितमत्यंताभावं प्रति मृषात्मता नियह्वा अयं पट।
एतत्तंतनिष्ठात्यंताभावप्रतियोगी पटत्वात् पटांतरवदित्याद्यनुमानं मिथ्यात्वे प्रमाणम् ०॥ ॥ ॥ ॥ श्रीराम ॥ ॥।

२८ समूलावच्छेदेन वर्तमानो यस्तदत्यंताभावस्तत्प्रतियोगित्वं शाखावच्छेदेनास्थितस्याकपिसंयोगस्यास्तीति सामानाधिकरण्यारूपार्थांतरसिद्धिस्त
द्वारणाय तदावश्यकम् तद्दाने तु स्वाश्रयत्वेनाभिमते यावति शाखादौ तदत्यंताभावसत्वान्न दोष इत्यर्थः॥ अस्मन्मते तस्माद्वा एतस्मादात्मनः आकाशः
संभूत इत्यादिश्रुत्या आकाशादेरपि जन्यत्वावगमात्तस्यापि स्वकारणाश्रितत्वावश्यंभावात् न तत्राव्याप्तिः॥ स्वोक्तलक्षणे चित्सुखाचार्यसं॥

वे.प. तदुक्तमिति· एवं प्राचीनोक्तमनुमानप्रयोगमुपपाद्य नवीनोक्तमनुमानप्रयोगमाह यद्वेति· तादात्म्यसंबंधेनैकावच्छेदेनेत्यपि द्रष्टव्यम् तथा च पूर्ववन्ना
टी.टी. र्थान्तरता एवं व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकत्वमत्यंताभावविशेषणं देयं तेन नतमादाय नार्थान्तरं तथा एतद्दोषवारणायैतत्कालीनत्वमपि तद्विशे
२६ षणमदेयम् न चैतत्तंतुषु पटसमवाय इति प्रत्यक्षबाध इति वाच्यम्० तस्य प्रत्यक्षस्य भ्रमप्रमाणतया चंद्रप्रादेशिकत्वप्रत्ययवदप्रमाण्यशंकास्कंदितत्वेन वा।
धितत्वात्· अत्रापि चित्सुखाचार्यसम्मतिमाह तदुक्तमिति· द्विशेषवएषएवमार्गः रूपं रूपिनिष्ठात्यंताभावप्रतियोगिगुणत्वात् स्पर्शवदित्येव क्रिया।

तदुक्ते अंशिनः स्वांशगात्यंताभावस्य प्रतियोगिनः अंशित्वादितरांशीवदित्येवं गुणादिषु इति न च घटादेर्मिथ्यात्वे सन् घट इति प्रत्यक्षे
णबाधः अधिष्ठानब्रह्मसत्तायास्तत्र विषयतया घटादेः सत्यत्वासिद्धेः न च नीरूपस्य ब्रह्मणः कथं चाक्षुषादिज्ञानविषयतेति वाच्यम्।
नीरूपस्यापि रूपादेः प्रत्यक्षविषयत्वात् न च नीरूपस्य द्रव्यस्य चक्षुराद्ययोग्यत्वमिति नियमः सन्मते ब्रह्मणो द्रव्यत्वासिद्धेः गुणाश्र
यत्वं समवायिकारणत्वं वा द्रव्यत्वमिति तेनेमिमतं नहि निर्गुणस्य ब्रह्मणो गुणाश्रयता नापि समवायिकारणता समवायासिद्धेः॥॥

दिष्वप्यूहनीयं ननूक्तं मिथ्यात्वानुमानं सन्घट इत्यादिप्रत्यक्षबाधितमित्याशंक्य परिहरति· न चेति ननु रूपादिहीनस्य ब्रह्मणश्चाक्षुषादिज्ञानविषयत्वम
नुपपन्नमित्याशंक्य निषेधयति· न च नीरूपस्येति· नीरूपस्यत्तु प्रत्यक्षविषयत्वं नास्तीति· नियमस्य व्यभिचारमाह· नीरूपस्यापीति· विशेषनियममाशंक्य राम
परिहरति· न चेति· नियमशरीरस्योक्तरूपत्वेपि नास्त्यस्माकं क्षतिरित्याह· सन्मते इति· ननु कथं ब्रह्मणो द्रव्यत्वं नास्तीति चेत्तत्र तल्लक्षणद्वयानुग। २६
मादित्याह· गुणेति· निर्गुणस्य साक्षी चेताः केवलो निर्गुणश्चेत्यादिश्रुत्या निर्गुणत्वेन बोधितस्य ॥ ॥

अस्तुयथाकथंचित्ब्रह्मणोपिद्रव्यतातथापिनदोषइत्यभ्युपेत्याप्याह अस्तुवेति·अस्मिन्कालेघटोनास्तीतिप्रतीतिवलात्कालस्येंद्रियवेद्यत्वम्· य
थास्वीकृतमध्वरमीमांसकैस्तथातदनन्यथासिद्धप्रतीति वलात्ब्रह्मणश्चाक्षुषत्वमस्माभिरप्यंगीक्रियते·तथाचब्रह्मव्यतिरिक्तचाक्षुषतायामेवम
हत्वे·सत्युद्भूतरूपवत्वंप्रयोजकमितिभावः·नन्वेवंतर्ह्याकाशेवलाकेतिप्रतीति वलादाकाशस्यापि चाक्षुषतास्यादित्यरुचेराह यद्वेति पारमार्थिकत्व
व्यावहारिकत्वप्रातिभासिकत्वभेदात्त्रिविधंविप्रयभेदादविरोधाइत्याह·तथाचेति·सत्वत्रैविध्येसतीत्यर्थः।ननु।अस्मिन्पक्षेनिषेधप्रतियोगिनोःसा

अस्तुवाद्रव्यत्वंब्रह्मणस्तथापिनोरूपस्यकालस्येवचाक्षुषादिज्ञानविषयत्वेपिनविरोधः·यद्वात्रिविधंसत्वंपारमार्थिकंव्यावहा
रिकंप्रातिभासिकंचपारमार्थिकंसत्वंब्रह्मणःव्यावहारिकंसत्वमाकाशादेःप्रातिभासिकंसत्वंशुक्तिरजतादेः तथाचघटःस
न्नितिप्रत्यक्षस्यव्यावहारिकसत्वविषयत्वेनप्रामाण्यमस्मिन्पक्षेचघटादेर्ब्रह्मणिनिषेधोनस्वरूपेणकिंतुपारमार्थिकत्वेनैवे
९७ वेतिनविरोधः·अस्मिन्पक्षेचमिथ्यात्वलक्षणेपारमार्थिकत्वावच्छिन्नप्रतियोगिताकत्वमत्यंताभावइतिविशेषणंद्रष्टव्यम्·
तस्मादुपपन्नंमिथ्यात्वानमानमितिइत्यनुमानपरिच्छेदः॥समाप्तः॥

मानाधिकरण्यंयसिध्यति ननुघटादिमिथ्यात्वमित्याशंक्याह॥अ
स्मिन्निति· स्वरूपेणव्यावहारिकत्वेनरूपेण॰तथाचैतत्पक्षेमिथ्यात्वलक्षणेइदंविशेषणमदेयमित्याह·अस्मिन्निति· मिथ्यात्वानुमानोपपादनमु
पसंहरति॥तस्मादिति॥ ॥इतिश्रीमत्परमहंसपरिव्राजकाचार्य्यवालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिसुनशि
वदत्तविरचितायांपरिभाषार्थदीपिकायामनुमानपरिच्छेदःसमाप्तः॥श्रीरस्तुशुभमस्तु॥:

अथक्रमप्राप्तमुपमाननिरूपणंप्रतिजानीते· अथेति· अनुमाननिरूपणानंतरमित्यर्थः तत्रेति· अनुमाननिरूपणानंतरंनिरूपणविषयीभूतोपमानेस
तीत्यर्थः अत्राप्युपमीयतेनेनेत्युपमानमितिव्युत्पन्नउपमानशब्दोलक्षणं अव्युत्पन्नस्तुलक्ष्यमित्याशयेनाह· सादृश्येतिसादृश्यप्रमायाउपमिति
प्रमायाःकरणमसाधारणकारणमुपमानमित्यर्थः॥ ननूपमानस्यप्रत्यक्षादावंतर्भावान्नपृथक्प्रमाणतेति· सांख्यादिभिरुक्तत्वात्कथमुपमानस्यसादृ॥
श्यज्ञानकरणतेत्याशंक्याह· तथाहीति· यथोपमानस्यसादृश्यप्रमाकरणत्वंतथाप्रदर्श्यतइत्यर्थः॥ गोसदृशः· गोभिन्नत्वेसति गोगतभूयोधर्मवान् तत्र
निश्चयद्वयमध्ये अयंपिंडोगोसदृश इति· गोनिरूपितगवयपिंडनिष्ठसादृश्यज्ञानंकरणं अनेनसदृशीमदीयागौरितिगवयपिंडनिरूपितगोनिष्ठसा॥

अथोपमानंनिरूप्यते· तत्रसादृश्यप्रमाकरणमुपमानं· तथाहि· नगरेषुदृष्टगोपिण्डस्यपुरुषस्यवनंगतस्यगवयेन्द्रियसन्नि
कर्षेसतिभवतिप्रतीति रयंपिंडोगोसदृश इति· तदनंतरंभवति· निश्चयः अनेनसदृशीमदीयागौरिति· तत्रान्वयव्यतिरेकाभ्यांग
वयनिष्ठगोसादृश्यज्ञानंकरणंगोनिष्ठगवयसादृश्यज्ञानंफलम्· नचेदंप्रत्यक्षेणसंभवतिगोपिंडस्यतदेन्द्रियासन्निकर्षात्॥

दृश्यज्ञानंफलं· प्रथमज्ञानेजातेसतिद्वितीयज्ञानस्योपदर्शनात्तद्विनातदभावादित्यन्वयव्यतिरेकाभ्यांप्रथमज्ञानस्योपमानत्वंद्वितीयज्ञानस्योप
मितित्वमित्यर्थः नचास्यप्रत्यक्षेणगतार्थतेत्याह· नचेति· इदंगवयप्रतियोगिकगोनिष्ठसादृश्यज्ञानंतदागवयपिण्डेनेन्द्रियसन्निकर्षसमये
तथाचेन्द्रियासन्निकृष्टगोपिंडनिष्ठसादृश्यज्ञानेनप्रत्यक्षप्रमाणफलमित्यर्थः· एतेन· यत्तुगवयस्यचक्षुःसन्निकृष्टस्यगोसादृश्यज्ञानंतत्प्रत्यक्ष
मेवातेस्ववश्यस्मर्यमाणायांगविगवयसादृश्यज्ञानंप्रत्यक्षं नह्यन्यद्वृत्तिसादृश्यमन्यत्र· गवयेभूयोवयवसामान्ययोगोजात्यंतरवर्तीजात्यंतरं
सादृश्यमुच्यते· सामान्ययोगश्चैकः सचेद्गवयेप्रत्यक्षोगव्यपितथेति· नोपमानस्यप्रमाणांतरत्वमस्तीति प्रत्युक्तम्· प्रोक्तविधयासादृश्यैकत्वेपि
प्रतियोगिधर्मिभेदेनभेदाभ्युपगमादिन्द्रियसन्निकृष्टगवयनिष्ठसादृश्यज्ञानस्यप्रत्यक्षत्वेपितदसन्निकृष्टगोनिष्ठस्यतस्यप्रत्यक्षत्वासंभवात्

नाप्यनुमानेनास्यगतार्थतेत्याह॰ नापीति॰ नहिमदीयागौरेतन्निरूपितसादृश्यवतीगोनिरूपितसादृश्यवत्वादस्येत्यनुमातुंशक्यं गोनिरूपितगवयनिष्ठसादृश्य॥
स्यगव्यवर्तमानत्वेनपक्षावृत्तितयातल्लिंगत्वाभावादित्याह॰ गवयनिष्ठेति॰ अनुमानांतरेणतत्समावमाशंक्यपरिहरति॰ नापीतिनतत्संभवः गवयनिरूपितगोनि।
ष्ठसादृश्यप्रमासंभवः अस्त्वेवंयाथाकथंचिदनुमानोत्थानंतथापिगोनिष्ठंसादृश्यनानुमानप्रमेयंतथाभूतानुमानुमानानुत्थानेपिनिरुक्तज्ञानस्यसर्वानुभ
वसिद्धत्वादनुमानस्यान्वयव्यतिरेकाभ्यांतत्कारणतासिद्धेः अन्यथायत्रयत्रानुमानावतरणसंभवस्तस्यतस्यानुमानप्रमेयत्वेप्रत्यक्षसिद्धस्यघटादेरपितत्प्रमे
यतयातत्तिधाधयिषयासर्वत्रायंघटःकंबुग्रीवादिमत्वात्॰ घटांतरवदित्येवमादिनानुमानसंभवात्प्रत्यक्षप्रमाणस्याप्यनुमानेंतर्भावः स्यादित्याशयेनाह॰ एवंवि

नाप्यनुमानेनगवयनिष्ठगोसादृश्यस्यातल्लिंगत्वात् नपिमदियागौरेतद्गवयसदृशीएते त्रिष्ठसादृश्यप्र तियोगित्वात् योयद्गतसादृ।
श्यप्रतियोगीसतत्सदृशः यथामैत्रनिष्ठदृश्यप्रतियोगीचैत्रः मैत्रसदृशइत्यनुमानात्तत्संभवइतिवाच्यम् एवंविधानुमानानवतारेप्य
नेनसदृशीमदीयागौरितिप्रतीतेरनुभवसिद्धत्वादुपमिनोमीत्यनुव्यवसायात्तस्मादुपमानंमानांतरम्॥ः

धेति॰ अनुव्यवसायादपिसादृश्यज्ञा
४३ नस्युपमानफलमित्याह॰ उपमिनोमीत्यनुव्यवसायाच्चेति॰ एतेनैयोप्ययंगोसदृशस्यगवयशब्दोवाचकइति॰ प्रत्ययः सोप्यनुमानमेवयोहिशब्दोयत्रवृद्धैःप्र
युज्यते॰ सोसतिवृत्यंतरेतस्यवाचकोयथा गोशब्दोगोत्वस्यप्रयुज्यते॰ चैषगवयशब्दोगोसदृशइति॰ तस्यैववाचकइतिप्रत्युक्तम्॰ अतएवनतद्ज्ञानमा।
गमस्यापिफलंगवयसदृशीमदीयागौरितिवाक्यमश्रुतवतोपि॰ तथाभूतज्ञानोत्पत्तिदर्शनात्तस्मादुपमानंनप्रत्यक्षाद्यनान्तरगतमित्युपसंहरति॰ तस्मादिति
॥इतिश्रीपरमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तावतंसरामकुमारसूनुधनपतिसूरिसुतशिवदत्तकृतायांवेदांतपरिभाषार्थदीपिका
उक्तानुव्यवसायेन॥टीपन५॥

नाव्याप्तिः५॥ ॥वक्ष्यमाणप्रकारेण॥५॥०॥

वे.प. ॥क्रमप्राप्तमागमनिरूपणंप्रतिजानीते॥ अथेति· उपमाननिरूपणानंतरंशब्दोनिरूप्यतइत्यर्थः॥ तत्रागमप्रमाणंलक्षयति· यस्येति· मानांतराबाधिततात्पर्य
टी.टी. गोचरीभूतपदार्थसंसर्गबोधकवाक्यंशब्दप्रमाणमित्यर्थः॥ शब्दसमानार्थकेप्रमाणांतरेतिव्याप्तिवारणायोक्तम्· वाक्यस्येति· वह्निनासिंचेदितिवाक्यस्यप्रमाण।
२८ तानिरासायोक्तम्· मानांतरेणनबाध्यतेइतिसप्रजापतिरात्मनोवपामुदखिददित्यादावव्याप्तिवारणायतात्पर्यविषयीभूतेत्युक्तम्· मानांतरेणेत्यस्यसजातीय
प्रमाणांतरेणेत्यर्थः॥ साजात्यंचव्यावहारिकतत्वावेदकत्वेनबोध्यम्· तेनपारमार्थिकतत्वावेदकैःनेहनानास्तिकिंचनेतिवेदांतैःघटानयनादिसंसर्गस्ययागस्वर्गा
दिसाध्यसाधनभावस्यचबाधेपिनक्षतिः॥ एतेनानुमानात्पृथक्शब्दमनंगीकुर्वन्तोवैशेषिकाःपराकृतावेदितव्याः· नेहिलौकिकानिगामानयेत्यादीनिवैदि
कानिज्योतिष्टोमेनस्वर्गकामोयजेतइत्यादीनितात्पर्यविषयपदार्थसंसर्गप्रमापूर्वकाणियोग्यतासतिमत्पदकदम्बकत्वात्घटमानयेत्यादिवदित्याद्यनुमानेनै।

अथागमोनिरूप्यते· यस्यवाक्यस्यतात्पर्यविषयीभूतसंसर्गोमानांतरेणनबाध्यते· तद्वाक्यंप्रमाणं· वाक्यजन्यज्ञानेच आकांक्षायो
ग्यताऽऽसत्तयस्तात्पर्यज्ञानंचेतिचत्वारिकारणानि· तत्रपदार्थानांपरस्परजिज्ञासाविषयत्वयोग्यमाकांक्षा०॥ वशब्दार्थसिद्धेःशब्देन

पृथक्प्रमाणमितिवदंति· कथमागमोनुमानात्पृथक्प्रमाणमित्याशंक्ययोग्यतादिसहकारजनितज्ञानस्यानुमानफलत्वाभावात्तथाभूतज्ञानजनकं।
वाक्यंपृथक्प्रमाणमवश्यमभ्युपेयमित्याशयेनाह· वाक्यजन्यज्ञानेचेति तथाचासत्यपिव्याप्तिज्ञानेविद्यमानेष्वाकांक्षादिषुसंसर्गज्ञानोपलंभान्नागम
स्यानुमानेऽन्तर्भावः क्लृप्तेनानुमानप्रमाणेनैवनिर्वाहेपृथक्प्रमाणंनकल्पनीयमिति· यद्याग्रहस्तर्हिमनसैवक्लृप्तेनप्रत्यक्षप्रमाणेननिर्वाहादनुमानमप्य
तिरिक्तप्रमाणंनाभ्युपेयं· यद्यनुमिनोमीत्यनुव्यवसायबलादभ्युपेयतेतर्हिशब्दादमुमर्थंजानामीत्यनुव्यवसायबलादागमोवश्यमभ्युपगंतव्यइतिभा राम
॥ ॥ ॥व· तात्पर्यज्ञानस्यबहुवादिभिरनंगीकारात्पृथगुपादानं· क्रमेणाकांक्षादिस्वरूपमाह· तत्रेति· आकांक्षादिषुचतुर्षुकारणेषुमध्य॥ ॥ ॥ २८

कुत एतदीत्याशंक्य क्रियादिश्रवणे कारकादेर्जिज्ञासाविषयत्वोपलंभात्पदार्थानां परस्परं जिज्ञासाविषयत्वयोग्यत्वमाकांक्षास्वरूपमित्याह॰ क्रियेति॰ आन
येति क्रियायाः श्रवणे घटमिति कारकस्य जिज्ञासाविषयत्वं घटमिति कारकस्य श्रवणे आनयेति क्रियायाः दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति स्वर्गकर
णश्रवणे समिधो यजति इडा यजतीत्यादीति कर्तव्यतायास्तच्छ्रवणे करणस्य चेत्यर्थः॥ ननु लाघवदावश्यकत्वाच्च विषयत्वपर्यंतमेवाकांक्षालक्षणमस्तु
किं योग्यत्वोपादानेनेचतत्राह॰ अजिज्ञासोरपीति॰ तथा च जिज्ञासारहितस्य वाक्यजन्यज्ञाने पदार्थानां परस्परं जिज्ञासाविषयत्वाभावेपि तद्योग्यसत्वान्नाव्याप्ति
रित्यर्थः॥ ननु अत्र सासातयाकांक्षाग्राहकं तादवच्छेदकं किमित्याकांक्षायामाह॰ तदिति॰ तथा च गौरश्व इत्यादौ क्रियात्वादेस्तदवच्छेदकस्याभावादाकांक्षाऽस
1 त्त त्वान्नातिव्याप्तिरित्यर्थः॥ ननु नैं हितेषु नीलसुत लंतत्वम सीत्यादिवाक्ये घाकांक्षावच्छेदकराहित्यादव्याप्तिरित्याशंक्याह॰ अभेदान्वय इति॰॥ अभेदेनान्व

क्रियाश्रवणे कारकस्य कारकश्रवणे क्रियायाः करणश्रवणे इतिकर्तव्यतायाश्च जिज्ञासाविषयत्वात् जिज्ञासोरपि वाक्यार्थबोधा
त्तद्योग्यत्वमुपात्तम्॰ तदवच्छेदकं च क्रियात्वकारकत्वादिकमिति नातिव्याप्तिर्गौरश्व इत्यादौ अभेदान्वये च समानविभक्तिकपदप्र
तिपाद्यत्वं तदवच्छेदकमिति तत्वमस्यादिवाक्येषु नाव्याप्तिः एतादृशाकांक्षाभिप्रायेणैव बलाबलाधिकरणे सा वैश्वदेव्यामिक्षा वाजि
भ्यो वाजिनमित्यत्र वैश्वदेवयागस्यामिक्षान्वितत्वेन न वाजिनाकांक्षेत्यादिव्यवहारः॥ योयत्र तत्वमस्यादिवाक्येऽवच्छेद्य योग्यत्वलक्षणाकां
क्षाया अनुगतत्वादवच्छेदकाऽननुगमेन दोषावह इति मंतव्यम्॰ नन्वन्वयबोधाभाव एवाकांक्षा किं न स्यात् तस्याः प्रागभावात्मकतया शाब्दज्ञानकारणत्वेन क्लृ
प्तत्वादित्याशंक्यैवंविधाकांक्षाभिप्रायेणैव मीमांसकैः श्रुतिलिंगादिबलाबलाबलाधिकरणे आकांक्षाया व्यवहृतत्वात्सैवमित्याह॰ एतादृशेति॰ तथा च तृतीया
ध्याय तृतीयपादस्थ जैमिनिसूत्रं॰ श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति॰ अत्र श्रुत्यादीनामेकविषयत्वसमवायेन वि
रोधे सति कस्य प्राबल्यं कस्य दौर्बल्यमिति चिंत्यते॰ तत्र निरपेक्षो रवः श्रुतिः यथा व्रीहीनवहंतीत्यत्र क्रियाफलभागित्वं कर्मत्वं बोधयंती द्वितीया श्रुतिर्निरपे॥
क्षैव व्रीहीणामवघातशेषत्वम्॰ प्रतिपादयति॰ अर्थविशेषप्रकाशनसामर्थ्यं लिंगं यथा। बर्हिर्देवसदनं सीदामीत्यस्य मंत्रस्य लवनार्थप्रकाशकतया॥

दधिर्नामासीतिपाठांतरम् दधिर्घीतकमायुधमिति माधवः ४

समवेतार्थभागस्य लिंगेन निर्वापे विनियुज्यमानस्याग्नये जुष्टं निर्वपामीति मंत्रस्य संबंधी यो देवस्य त्वा सवितुः प्रसवेऽश्विनो
र्बाहुभ्यां पूष्णो हस्ताभ्यामिति भागस्तस्यैकवाक्यत्वबलेन विनियोग इति॥ टीपन् २ पं·॥

वे·प· वर्हिर्लवने विनियोगः परस्पराकांक्षावशात्कचिदेकस्मिन्नर्थे पर्यवसितानि पदानि वाक्यं यथा देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जु
टी·दी· ष्टं निर्वपामीत्यत्र लिंगेन निर्वापे विनियुज्यमानस्य समवेतार्थभागस्यैकवाक्यबलेन देवस्य त्वेत्यादिभागस्य विनियोगः॥ लब्धवाक्यभावानां पादानां का
२९ यांतरापेक्षया वाक्यांतरेण संबंधे आकांक्षापर्य्यवसन्नं प्रकरणम् यथा समिधो यजतीत्यादेर्दर्शपूर्णमासकथंभावाकांक्षायां पठनाच्छेषत्वम्॥ क्रमः
स्थानमनेकस्याम्नानस्य सन्निधिविशेषाम्नानं यथा दब्धिरसीत्यत्राग्नेयाग्नीषोमीयायामुयागाः क्रमेण ब्राह्मणे विहिता मंत्रभागेपि क्रमेण मत्रत्रयं पठितं
त्राग्नेयाग्नीषोमीययोर्लिंगेनैव द्वयोर्विनियोगसिद्धिः दब्धिरसीत्यत्र तु न लिंगादि विनियोजकमस्ति किंतु यस्मिन्प्रदेशे ब्राह्मणे उपांशुयागविधानं त
स्मिन्नेव प्रदेशे मंत्रेप्यस्य पाठ इति क्रमादुपांशुयागानुमंत्रणे स्य विनियोगः योगबलं समाख्या यथा हौत्रं औद्गात्रमित्यादौ होतुरिदं हौत्रमित्यादि
योगबलेन होत्रादिसमाख्यानि कर्माणि होत्रादिभिरनुष्ठेयानि प्रकृते श्रुतिवाक्यविरोधे वाक्यदौर्बल्योदाहरणं तप्ते पयसि दध्यानयति सा
वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति तत्र वाजिनस्य किं विश्वेदेवांगत्वं किंवा वाजिसंज्ञकदेवतांगत्वमिति संशये वाजमन्नमामि॥
क्षा तदेषामस्तीति व्युत्पत्त्या वाजिपदस्य विश्वेदेवपरत्वात् वाजिभ्यो वाजिनमिति वाक्याद्वाजिनस्य विश्वेदेवतांगत्वमवाग
म्यते न चामिक्षया वाजिनबाधः किंतु तया सह विकल्पः समुच्चयो वेति प्राप्ते सिद्धांतः न तावद्वाजिनस्य विश्वे॥ ॥
देवांगत्वं वैश्वदेवीति तद्धितश्रुत्या मिक्षया तेषां संबंधस्यौचित्यात् स्येति सर्वनामार्थे तद्धितस्य॥ ॥ ॥
॥ ॥ ॥ ॥ ॥ ॥ स्वतंत्वात्सर्वनाम्नश्च सन्निहितविशेष्यसमर्प्यकत्वादामिक्षा॥ १॥ १॥ राम
॥ याः श्रुतत्वेन तद्धितवाच्यत्वात्॥ ॐ नमो भगवते वासुदेवाय ॐ नमः शिवाय इति॥ २९

एवंचवविकल्पसमुच्चयौकल्प्यौविश्वेदेवसंबंधवत्यामिक्षयावाजिनाकांक्षाभावादिति· ननुभवदभिमतस्याकांक्षालक्षणस्यवाजिनेपिसत्वात्कथमुक्त
तन्नैराकांक्ष्यव्यवहारोभवदुक्ताकांक्षासंवादीत्याशयेनशंकते· नन्विति· तत्रापिस्यावैश्वदेव्यामिक्षेत्यादावपिप्रागनिरूपितजिज्ञासाविषयत्वावच्छेदकस्य
प्रदेयद्रव्यत्वस्यसत्वादित्यर्थः· प्रदेयेति· प्रदेयद्रव्यत्वस्यतदवच्छेदकत्वेजनितान्वयबोधादपिवाक्यात्पुनरन्वयेबोधायतः स्वसमानजातीयेत्यादिविशेषण

ननुतत्रापिवाजिनास्यजिज्ञासाऽविषयत्वेपितद्योग्यत्वमस्त्येवप्रदेयद्रव्यत्वस्ययत्प्रागनिरूपितजिज्ञासाविषयतावच्छेदक
त्वादितिचेन्नः स्वसमानजातीयपदार्थान्वयबोधविरहसहकृतप्रदेयद्रव्यत्ववत्तदवच्छेदकत्वेनवाजिनद्रव्यस्यस्वसमा
नजातीयामिक्षाद्रव्यान्वयबोधस्यसहकृतत्वेनतादृशावच्छेदकाभावात्॥ आमिक्षायांतुनैवंवाजिनान्वयस्यतदानुप॥:
३० स्थितं॰त्वात्॥ उदाहरणांतरेष्वपिदुर्बलत्वप्रयोजकआकांक्षाविरहएव द्रष्टव्यः॥७॥७॥७॥७॥७॥७॥७॥:

विशिष्टस्यतस्यतत्वांगीकाराद्वाजिनेतदसत्वादुक्तलक्षणासंगमान्नोक्तदोषइत्याशयेनपरिहरतिनेतिस्वसमभिव्याहृतपदेनस्मारितोयः स्वसमानः
जातीयः स्वसदृशः पदार्थस्तदन्वयबोधविरहेणसहकृतंयत्प्रदेयद्रव्यत्वंतसैवतदवच्छेदकत्वेनयागनिरूपितजिज्ञासाविषयत्वावच्छेदकत्वेनवाजिनद्रव्य
स्यस्वसदृशामिक्षापादार्थान्वयबोधसहकृतत्वेनतद्विरहसहकृतप्रदेयद्रव्यत्वरूपावच्छेदकाभावादित्यर्थः॥ नन्वस्तुवाजिनपदार्थेनैवान्वयबोधस्तथा॥:

चामिक्षायामेवनादृशावच्छेदकाभावः किंनस्यादित्याशंक्याह॰ आमिक्षायांत्विति॰ प्रथमश्रुतामिक्षान्वयबोधकालेवाजिनान्वयबोधस्योत्था
नाभावादितिहेतुमाह॰ वाजिनेति॰ यथाश्रुतिवाक्यविरोधेवाक्यदौर्बल्यप्रयोजकत्र्याकांक्षाविरहस्तथोदाहरणांतरेष्वपिसएवेत्यतिदिशति॥ उदा
हरणांतरेष्वपीति॰॥ तत्रश्रुतिलिंगविरोधलिंगदौर्बल्यम्॥ यथाऐंद्र्यागार्हपत्यमुपतिष्ठतइतिश्रूयते॰तत्रसंशयः॰किंकदाचनस्तरीरसिनेंद्रसश्चसि
दाशुषइत्यसाध्दगैंद्रीतेनेंद्रमंत्रेणेंद्रउपस्थेयः उतगार्हपत्यइति॰ भोइंद्रकदाचिदपिघातकोनभवसिकिंत्वाहुतिदत्तवतेयजमानायप्रीयसेइति॰॥:॥:
इंद्रप्रकाशनसामर्थ्यात्लिंगादिंद्रउपस्थेयइतिप्राप्तेसिद्धांतः गार्हपत्यमिति॰प्रत्यक्षश्रुत्यागार्हपत्योपस्थानेविनियुक्तस्यमंत्रस्यपुनर्विनियोगा॥:
कांक्षायाअनुदयाद्विनियोजकंलिंगंनप्राप्नोति॰ येनेंद्रोपस्थानेमंत्रोविनियुज्येतेति॰ लिंगवाक्ययोर्विरोधेवाक्यदौर्बल्यम् यथादर्शपूर्णमास॥:
योःश्रूयते॥स्योनंतेसदनंकृणोमिघृतस्यधारयासुशेवंकल्पयामि तस्मिन्सीदामृतेप्रतितिष्ठव्रीहीणांमेधसुमनस्यमानइति॰॥भोपुरोडाशत्वंसमी
चीनंस्थानंकरोति॰तच्चस्थानंघृतस्यधारयासुष्ठुसेवितुंयोग्यंकल्पयामिभोव्रीहिसारभूतत्वंसमाहितमनस्कस्तस्मिन्समीचीनेस्थानेउपविश॥
तत्रस्थिरोभवेत्यर्थः॥तत्रायंसर्वोपिमंत्रः॥स्थानकरणेपुरोडाशस्थापनेचविनियुज्यते॰ किंवाद्वयमुभयत्रव्यवस्थितमितिसंशये॰तस्मिन्नि
त्यनेननतच्छब्देनप्रकृतवाचिनापूर्वोत्तरार्द्धयोरेकवाक्यत्वेसतिमत्रद्वयाभावात्सर्वोप्ययंमंत्रः स्थानकरणस्यपुरोडाशस्थापनस्यचांगंतत्रसर्वेणा
नेनमंत्रेणस्थानंकर्तव्यमितिविनियोजिकाश्रुतिः कल्पनीयातथासर्वेणमंत्रेणपुरोडाशः॥:

स्थापनीयइत्यपिकल्पनीयः सदनांगत्ववत्प्रतिष्ठापनांगत्वस्यापितद्वाक्यबोधितत्वादितिप्राप्तेराद्धांतः पूर्वोत्तरार्द्धयोः परस्परान्वयेनसंबन्धस्यैकवाक्यस्यो
त्तरार्द्धस्यसदनकरणेशक्तिमकल्पयित्वासर्वमंत्रस्यसदने विनियोक्तुमनर्हत्वात्पूर्वार्द्धस्यस्थापनेशक्तिमकल्पयित्वास्थापनेसर्वमंत्रस्यविनियोक्तुमनर्हत्वा
च्चलिंगकल्पनव्यवधानेश्रुतिंप्रतिवाक्यंविप्रकृष्यते ॥ प्रत्यक्षेतुलिंगद्वयेसन्निकृष्यते तथाचलिंगेनवाक्यवाधाद्द्वयमुभयत्रव्यवस्थितमिति अत्राप्याकांक्षावि
रहएववाक्यस्यदौर्बल्यप्रयोजकइति ॥ वाक्यप्रकरणयोर्विरोधेप्रकरणदौर्बल्यम् ॥ यथासूक्तवाकेश्रूयते ॥ अग्निषोमाविदंहविरजुषेतामवीवृधेतामहज्यायोक्रा
तांइन्द्राग्नीइदंहविरजुषेतामवीवृधेतामहेज्यायोक्रातामित्यादि ॥ तत्रसंशयः देवतापदैकवाक्यताभूतानीदंहविरजुषेतामित्यादीनियानिपदानितानिकिंतत्तो
विछिद्यान्यत्रापिप्रकरणाविशेषात्प्रयोक्तव्यानि उततत्तद्देवतापदेनैकवाक्यतायातद्देवव्यवस्थितानीति — तत्रदेवतावाचकाग्नीषोमादिपदंपौर्णमास्या
दिकालेयथादैवतंविभज्यप्रयुज्यते ॥ यत्विदंहविरित्यादिकमवशिष्टंपदजातंतदग्नीषोममंत्रगतमप्यमावास्यामग्नीषोमपदपरित्यागेनपठनीयमत
थाइन्द्राग्नीमंत्रगतमपिपौर्णमास्यामिंद्राग्नीपदपरित्यागेनपठनीयम् ॥ तथासत्येषांमंत्रभागानांसर्वशेषत्वबोधको दर्शपूर्णमासपाठोनुगृह्यतेइति
प्राप्तेसिद्धांतः अग्नीषोममंत्रशेषस्यैंद्राग्नीपदान्वयाश्रवणात्प्रकरणे नप्रथमंतदन्वयरूपंवाक्यंकल्पनीयम् तेनचवाक्येनेन्द्राग्नीप्रकाशनसामर्थ्यरूप
लिंगंकल्प्यतेतेनचानेनमंत्रभागेनैंद्राग्नीविषयाक्रियानुष्ठेयेति विनियोजिकाश्रुतिः ॥ कल्प्यतेततः प्रकरणवियोगयोर्मध्येत्रिभिर्व्यवधानंभवति
अग्नीषोमपदान्वयरूपंवाक्यंश्रूयमाणत्वाल्लिंगश्रुतिभ्यामेवव्यवधीयते तस्माद्वाक्येनप्रकरणस्यवाधितत्वात्तच्छेषस्तत्रैवव्यवतिष्ठते अत्रापिवि
छिद्यान्यत्राप्रयोगेआकांक्षाविरहएवकारणम् ॥ स्थानप्रकरणयोर्विरोधेस्थानदौर्बल्यम् यथाराजसूयेवहवः पश्विष्टिसोमयागाः सर्वेफलवंतः सम
प्रधानाः तत्राभिषेचनीयोनामसोमयागः तत्सन्निधौविदेवनादयः समाम्नाताः अक्षैर्दीव्यतिराजन्यंजिनातिशौनः शेयमाख्यापयतिइतिजिनातिजयति ॥
वहृचब्राह्मणेसमाम्नातंशुनः शेयविषयमाख्यानंशौनः शेयंतत्रसंशयः तेविदेवनादयः किंसर्वस्यराजसूयस्यांगमुताभिषेचनीयस्यैवेति तत्रसन्निधि
वशाद्विदेवनादयोऽभिषेचनीयांगमितिप्राप्तेराद्धांतः राजसूयस्यकथंभावाकांक्षायामनुवृत्तायांविहिताविदेवनादयः प्रकरणेनराजसूयशेषाः राज
सूयश्चवहुयागात्मकइतितत्रत्यंसर्वयागशेषभूतंविदेवनादिकम् नचाभिषेचनीयस्यकाचिदाकांक्षाविदेवनादिष्वस्तिज्योतिष्टोमविकृतित्वेनाति ॥

३१

वे.प. स्थानसमाख्ययोर्विरोधे समाख्यादौर्बल्यं यथा पौरोडाशिकसमाख्याने दर्शपूर्णमासकांडे सान्नाय्यपात्रशुंधनं समाख्यातम् तत्र शुंधध्वं दैव्याय कर्मणे दे
टी.दी. वयज्यायाइति मंत्रोदाहरणं स किं पुरोडाशपात्रांगमुत सान्नाय्यपात्रांगमिति संशये पौरोडाशिकमिति समाख्याने कांडे पाठेनत्वात्समाख्यया पुरोडाशकां
३१ डांगानामुलूखलजुह्वादीनामपि शोधनेङ्गमिति प्राप्ते सिद्धान्तः ॥ पौरोडाशिकमिति समाख्यायां प्रकृतिः पुरोडाशमभिधत्ते तद्धितप्रत्ययश्च कांडम् न चै
तावता कृत्स्नपुरोडाशपात्राणां सन्निधिरत्र प्रसक्तोस्ति किंत्वर्थात्प्रकल्प्यते तस्मात्काण्ड समाख्यया सन्निधिः परिकल्प्यते सन्निधेश्चान्यथानुपपत्त्या परस्परा
कांक्षारूपकं तत्र पात्रप्रकरणं कल्पयित्वा वाक्यलिंगश्रुतीः परिकल्प्यते या श्रुत्या विनियोग इति समाख्यायां विप्रकर्षः सान्नाय्यपात्राणां शोधनमंत्रस

योग्यता वा तात्पर्यविषयीभूतसंसर्गाबाधः वह्निना सिंचतीत्यादौ तादृशसंसर्गबाधान्न योग्यता सप्रजापतिरात्मनो वपामुदखिद ॥
दित्यादावपि तात्पर्यविषयभूतपशुपाशत्वाबाधात् योग्यता तत्त्वमस्यादिवाक्येष्वपि वाच्याभेदबाधेपि लक्ष्यस्वरूपाभे
देबाधाभावात् योग्यता आसत्तिश्चाव्यवधानेन पदजन्यपदार्थोपस्थितिः ॥ मानांतरोपस्थापितपदार्थस्यान्वयबाधा ॥
भावात्पदजन्येति अत एवाश्रुतपदार्थस्थले तत्तत्पदाध्याहारः द्वारमित्यादौ पिधेहीति ॥ सन्निधिस्तु प्रत्यक्षः इध्माबर्हिः संपादनस्य मु

ष्टिनिर्वापस्य चान्तराले सान्नाय्यपात्राणां देश उक्तः मंत्रश्चेध्माबर्हिर्निर्वापविषययोर्मंत्रानुवाकयोर्मध्ये मनुवाके पठ्यते तेन च प्रत्यक्षसन्निधिना प्र
करणादीनां चतुर्णामेव कल्पनात् सन्निधिः सन्निकृष्यते तस्मात्क्रमेण समाख्यां बाधित्वा सान्नाय्यपात्रशोधनांगमेव मंत्रः ॥ स्थानं सन्निधिः
क्रम इत्यनर्थान्तरमिति योग्यतां लक्षयति ॥ योग्यतेति ॥ एतेन लक्षणाभिधानफलमाह ॥ वह्निनेति ॥ तथाप्यस्तु संसर्गाबाधो योग्यतेत्याशंक्याह ॥:
सप्रजापतिरिति ॥ एवं च सांप्रदायिकतत्त्वमस्यादिवाक्यार्थेप्युपपन्न इत्याह ॥ तत्त्वमस्यादीति ॰ क्रमप्राप्तामासत्तिं लक्षयति ॰ आसत्तिश्चेति पदजन्येत्या: राम
सप्रयोजनमाह मानांतरेति यतो मानांतरोपस्थापितपदार्थस्यान्वयबोधो नास्त्यत एवाश्रुतपदार्थस्थलेऽन्वयबोधयोग्यपदार्थोपस्थापकपदाध्याहारः ३१
संगच्छत इत्याह अत एवेति अत एव वेदपि तादृशपदाध्याहार इत्याह ॥:॥:

॥ अत एवेति· द्वितीयाध्याये चिंतितं समेषु वाक्यभेदः॥ यत्र कर्मसमवेतार्थप्रकाशकं निर्वपामीत्यादि पदमस्ति तत्र सुगमेपरिमाणम्· यत्र तु समवेतार्थप्रदाभावेन लौकिकविनियोगाभावे वा चनिको विनियोगः स्वरूपतो गम्यते· यथा इषे त्वोर्जे त्वेति· तत्र संशयः किं प्राग्दृष्टार्थमंत्रावधेरेकमंत्रत्वमुत यावदेव मिथः संबंधमिषे त्वेति· तावदेकं यजुरन्यच्च· यजुरंतरमिति· इषे त्वोर्ज्जे त्वेत्यत्र सोयं पदसमुदाय एको मंत्रः तस्यादृष्टार्थत्वेनैकस्यैवादृष्टस्य कल्पने लाघवात् न चोरुप्रथस्वेत्यादिमंत्रवदनुष्ठेयार्थस्मारकता संभवति। क्रियापदाभावेन तदर्थप्रतीत्यभावादिति प्राप्ते राद्धांत इषे त्वोर्ज्जे त्वेत्यादौ यजुर्भेदः इषे त्वेति।

अत एवेषे त्वेत्यादिमंत्रे छिनद्मीति पदाध्याहारः अत एव विकृतिषु सूर्य्याय जुष्टं निर्वपामीति पदप्रयोगः पदार्थश्च द्विवि॥ धः शक्यो लक्ष्यश्चेति· तत्र शक्तिर्नाम पदानामर्थेषु मुख्या वृत्तिः यथा घटपदस्य पृथुबुध्नोदराद्याकृतिविशिष्टे वस्तुविशेषे वृत्तिः। सा च शक्तिः पदार्थांतरम्· सिद्धांते कारणेषु कार्य्यानुकूलशक्तिमात्रस्य पदार्थांतरत्वात्॥ ८ ॥ ॐ ॥ ८ ॥

32 छिनत्ति ऊर्ज्जे त्वेत्यनुमार्ष्टीति पलशशाखायाः छेदनमार्ज्जनयोर्विनियोगात्तत्र तदनुसारेण छिनद्मि अनुमार्ज्मीत्यर्थभेदश्रुति ॥ अत एव माना॥ नरेत्याद्युक्तहेतोरेव नवमाध्यायप्रथमे पादे स्थितं गुणशब्दस्तथेति चेदिति· देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामीति मंत्रे सवितृश्विपूषशब्दानां विकृतिषूहाभावः उक्तस्तत्राग्निशब्देपि किमसमवेतवचनो हितव्य उत समवेतवचनऊहितव्य इति संशये देवतांतरवाचि सवित्रादिशब्दवदग्निशब्दस्यापि निर्वापस्तावकत्वेन पाठान्नोहनीय इति प्राप्ते राद्धांतः सवित्रादिशब्दानां कर्मण्यसमवेतार्थत्वे॥ गणशब्दः जुष्टशब्दार्थे गुणामूत्ताग्न्यादिवाचकः शब्दः तथा सवित्रादिशब्दवत्तावकः जुषू धातोः कर्मणि मूत्तार्थे निष्ठाविहितात तथा च जुष धातोर्भक्षणार्थः॥ अग्नये इति तादर्थ्ये च तुर्थी अग्निकर्तृक मूत्तकालीनभक्षणकर्मीमूत हविःकर्मकनिर्वापं भावमीति वाक्यार्थो वाच्यः सच वाधितः निर्वापकाले ग्निकर्तृकभक्षणा

नाग्निशब्दस्यचाग्नेयेकर्म्मणिसमवेतार्थत्वेनदृष्टांतवैषम्यादूहनीयइति·ननुनिर्वपाम्यूर्द्दहविषोजुष्टत्वाभावात्तद्योगादग्निशब्दोपिनस्यादितिचेन्नजु
ष्टंयथाभवति·तथानिर्वपामीति क्रियाविशेषणत्वेनभविष्यज्जोषणपरत्वेसतिसमवेतार्थत्वात्तस्मात्सोर्य्ययागेसूर्य्यायजुष्टंनिर्वपामीत्येवमूह
नीयमिति।पारंजन्यपदार्थोपस्थितिरित्युक्तं·तत्रपदार्थःकतिविधइत्यपेक्षायामाह·पदार्थश्चेति·पदनिष्ठशक्तिविषयःशक्यःपदवृत्तिलक्षणा
विषयोलक्ष्यःगौण्यावृत्तेःलक्षितलक्षणायामन्तर्भावस्यवक्ष्यमाणत्वाद्वृत्तेर्द्विविध्यात्पदार्थद्वैविध्यम् केवललक्षणायांश्चगौण्यनन्तर्भावा।
च्छक्यो लक्ष्यश्चेतिविभागइतिभावः·तयोःशक्तिलक्षणानिरूपणायत्तनिरूपणत्वाच्छक्यस्वरूपावगमार्थमादौशक्तिं निरूपयति·
ति·तयोःशक्यलक्ष्ययोःशक्यविशेषणीभूताशक्तिरित्यर्थः॥अर्थेषुवृत्तिः॥अर्थविषयणीवृत्तिःपदानांकार्य्यान्वितेष्वेवार्थेषुवृत्तिमिव
दतांप्रभाकराणांनिराकरिष्यमाणत्वादाह॥अर्थेष्विति॥लक्षणायामतिव्याप्तिवारणायाह॥मुख्येति·उदाहरति यथेति· पृथुवि।
पुलंचतद्बुध्नंचवर्तुलंचयदुदरंतदादिर्यस्यग्रीवादिस्तदाकृतिविशिष्टइत्यर्थः शक्तिः संकेतःसचपरमेश्वरेच्छा॥॥
अनेनपदेनायमर्थोबोधव्यइत्येवंरूपानतुपदार्थांतरंमानाभावादिति·नैयायिकास्तान्निराचष्टेसाचेति॥॥
येषांमतेशक्तिमात्रस्यपदार्थांतरतातेषांमतेपदनिष्ठाशक्तिः पदार्थांतरमिति· किमुवक्तव्य॥॥
॥०॥मित्याह· सिद्धांतइति·तथाचशक्तेःपदार्थांतरत्वेदाहादिलक्षणकार्य्यानुपप
त्तिरेवःप्रमाणंप्रतिबंधकाभावस्यत्वभावतयानहेतुत्वंदाहादिकं॥
यंवह्निनिष्ठस्वानुकूलशक्तिपूर्वकंकार्य्यत्वाद्दृष्टवदिति॥॥
भावः॥उपलक्षणमेतत् परास्यशक्तिर्विविधै॥॥।
वश्रूयते· शक्तयःसर्वभावानामचिंत्याज्ञानगोचराइत्यादिश्रुतिस्मृतिवचनान्यपिपृथक्शक्तिसद्भावेमानमित्यर्थः



दै २

ननुसन्तुकारणेषुकार्यानुमेयाशक्तयः प्रकृतेकेनकार्येणपदनिष्ठाशक्तिरनुमीयतइत्यपेक्षायामाह॥ साचेति॥ पदार्थज्ञानेपदनिष्ठस्वानुकूलशक्तिपूर्व
कंपदजन्यपदार्थज्ञानरूपकार्यत्वादित्येवमनुमेयेत्यर्थः एवंशक्तिंनिरूप्यशक्यंलक्षयति· तादृशेति· उक्तलक्षणशक्तिविषयत्वंतच्चशक्यत्वंजातेर्व्यक्तेर्वाइत्य
पेक्षायामाह· तच्चेति· जातिरत्रानुगतोधर्मःपरैर्जातिशब्देनव्यवह्रियमाणस्तेनजातित्वोपाधित्वपरिभाषायाःसर्वप्रमाणागोचरत्वोक्तिविरोधोनशंक्यः तत्र
हेतुमाह· व्यक्तीनामिति। नन्वनुगतधर्मस्यशक्यत्वाभ्युपगमेगामानयपशुमालभेदित्यादौगवादिपदाद्व्यक्तिभानंनस्यादित्याशंकतेकथमिति· यद्यपिजा
तिरेवशक्यातथापिधर्मधर्मिणोस्तादात्म्यादेकसंविति वेद्यत्वाद्व्यक्तिसमानसंवितिसंवेद्यजातिभानसमयेव्यक्तिभानमविरुद्धमित्याहजातेरिति ननुपदा

साचतत्तत्पदजन्यपदार्थज्ञानरूपकार्यानुमेयातादृशशक्तिविषयत्वंशक्यत्वंतच्चजातेरेवनव्यक्तेः व्यक्तीनामानंत्येनगुरु
त्वात् कथंतर्हिगवादिपदाद्व्यक्तिभानमितिचेत् जातेर्व्यक्तिसमानसंवित्संवेद्यत्वादितिब्रूमः यद्वागवादिपदानांव्यक्तौशक्तिः
स्वरूपसतीनतुज्ञाताहेतुः जातौतुज्ञाताणव्यक्त्यंशशक्तिज्ञानमपिकारणंगौरवात् जातिशक्तिमत्वज्ञानेसतिव्यक्तिशक्तिमत्वज्ञा
नविनाव्यक्तिधीविलंबाभावाच्च अतएवन्यायमतेप्यन्वयेशक्तिःस्वरूपसतीतिसिद्धांतः ज्ञायमानशक्तिविषयत्वमेववाच्यत्व
33 मितिजातिरेववाच्या॥ व्यक्तिसंविदेवदुर्लभातत्प्रयोजकशक्तेरभावादित्यरुचेराह· यद्वेति· स्वरूपसतीस्वरूपेणैववर्त्तमानाव्यक्तिबोधकगा
वादिपदनिष्ठसामर्थ्यस्वरूपसत्येवेत्यर्थः व्यावर्त्यमाह· नत्विति· गवादिपदाद्व्यक्तिभानार्थंगवादिपदानांव्यक्तौशक्तिरस्तीतिज्ञानंनापेक्षितमित्यर्थः एत
देवस्फुटयति· जाताविति· गवादिपदानांजातौशक्तिरितिज्ञाताजातिभानहेतुरित्यर्थः व्यक्तिभानेशक्तिःकारणंनतुतज्ज्ञानमपीत्याह· नेतितत्रहेतुमाह·
गौरवादिति· उभयत्रशक्तिज्ञानस्यकारणत्वकल्पनेगौरवात् नन्वावश्यकत्वाज्ज्ञौरवंनदोषावहमित्याशंक्याह· जातीति· यतःशक्तिज्ञानंविनैवयस्यज्ञानं
तज्ज्ञानार्थंशक्तिज्ञानकल्पनमनुचितम् अतएवनैयायिकैर्गवादिपदार्थस्यपदार्थान्तरान्वयेशक्तिःस्वरूपसतीस्वीकृतेत्याह· अतएवेति· नन्वेवंतर्हि
व्यक्तिरपिशक्याशक्तिविषयत्वंशक्यत्वमित्युक्तत्वाद्व्यक्तौचशक्तेः॥

स्वीकारात्तथा च जातेर्व्यक्तेः अशक्यत्वे गौरवमित्याशंक्यास्मिन्पक्षे ज्ञायमानशक्तिविषयत्वं न तु शक्तिविषयत्वमतो नोक्तदोष इत्याह· ज्ञायमानेति· ननु व्य
क्तेरशक्यत्वे तत्र शक्तिकल्पनमपि वृथा तज्ज्ञानस्य लक्षणयैव संभवात् अन्वयस्य च वाक्यगम्यत्वेन पदशक्त्यविषयत्वादित्यरुचेः पक्षान्तरमाह· अथवेति·
तथा च गवादिपदस्य जातौ शक्तिः तद्विशिष्टव्यक्तौ लक्षणेति भावः॥ केवलस्य शक्तिगम्यत्वं विशिष्टस्य लक्षणागम्यत्वं क्वदृष्टमित्यपेक्षायामाह· यथेति· अ
त्र मीमांसकसम्मतिमाह· तदुक्तमिति· अनन्यलभ्यो लक्षणादिना लभ्यो यो न भवति· स शब्दार्थः शब्दशक्तिगम्य इत्यर्थः· शक्यनिरूपणमुपसंहरति· एवमि

अथवा व्यक्तेर्लक्षणयावगमः यथा नीलो घट इत्यत्र नीलशब्दस्य नीलगुणविशिष्टे लक्षणा तथा जातिवाचकस्य ॥:॥:
तद्विशिष्टे लक्षणा तदुक्तं अनन्यलभ्यो हि शब्दार्थ इति· एवं शक्यो निरूपितः अथ लक्ष्यपदार्थो निरूप्यते· तत्र लक्ष ॥:
णाविषयो लक्ष्यः लक्षणा च द्विविधा केवललक्षणा लक्षितलक्षणा चेति· तत्र शक्यसाक्षात्संबंधः केवललक्षणा· य
था गंगायां घोष इत्यत्र प्रवाहसाक्षात्संबंधिनि तीरे गंगापदस्य केवललक्षणा॰ ॥ ९ ॥ ॐ नमः॥ शिवाय॰ ॥ ॥:

ति· लक्ष्यस्य शक्यनिरूपणायत्तनिरूपणत्वात्तन्निरूपणानंतरं लक्ष्यपदार्थनिरूपणं प्रतिजानीते॥ अथेति· तत्र शक्यनिरूपणानन्तरं निरूपणविषयीभू
ते लक्ष्ये सति तथाभूतनिरूपणविषयीभूतो लक्ष्यो लक्षणाविषय इति वा लक्ष्यज्ञानस्य लक्षणाज्ञानाधीनत्वात्तां निरूपयति· लक्षणेति· तत्र केवललक्षणाल
क्षितलक्षणयोर्मध्ये उदाहरणमाह· यथेति· यथा गंगायां घोष इत्यस्मिन् वाक्ये गंगापदवाच्यप्रवाहेण साक्षात्संबंधवति तीरे गंगापदस्य केवललक्षणावृत्तिः
लक्षितलक्षणां लक्षयति· यत्रेति· शक्यपरम्परासंबन्धो लक्षितलक्षणेत्यर्थः· एतदुदाहरणमाह· यथेति· यथा द्विरेफपदस्य शक्यरेफद्वयघटितभ्रमरप
दद्वारा तदर्थे वृत्तिरित्यर्थः॥

ननु पदार्थश्च द्विविध इत्युक्त्वा वृत्तिद्वैविध्यनिरूपणमयुक्तं गौण्या वृत्तेर्विद्यमानतया वृत्तेस्त्रैविध्येन पदार्थस्य त्रैविध्यादित्याशंक्य गौण्या वृत्तेर्लक्षितलक्ष
णान्तर्भावान्नोक्तदोष इत्यशयेनाह· गौण्यपीति· तल्लक्षणे गौण्यां योजयति· सिंह इति प्रकारांतरेण लक्षणा विभजते· प्रकारांतरेणेति· तत्र तिसृषु लक्षणासु मध्ये।
यत्र यस्मिन्पदे वाक्ये वा शक्यार्थमनन्तर्भाव्यार्थान्तरस्य भाने· तत्र जहल्लक्षणा शक्यसंबंधिमात्रविषया वृत्तिरित्यर्थः· यद्यपि गंगायां घोषः प्रतिवसतीत्यत्र गं
गापदे शक्यार्थप्रवाहरूपमनन्तर्भाव्य तीररूपस्यार्थान्तरस्य प्रतीतिरस्त्यतो गंगापदं जहल्लक्षणोदाहरणं तथापि तस्य सर्वैरुदाहृतत्वात् सिद्धवत्कृत्वा वाक्यस्थ

यत्र शक्यपरम्परासंबंधेनार्थान्तरप्रतीतिस्तत्र लक्षितलक्षणा यथा द्विरेफपदस्य रेफद्वये शक्तस्य भ्रमरपदघटितपरम्परासंबन्धेन म
धुकरे वृत्तिः गौण्यपि लक्षितलक्षणैव यथा सिंहो माणवक इत्यत्र सिंहशब्दवाच्यसंबंधिक्रौर्यादिमत्संबंधेन माणवकस्य प्रतीतेः। प्रका
रांतरेण लक्षणा त्रिविधा जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा चेति· तत्र शक्यमनन्तर्भाव्य यत्रार्थान्तरप्रतीतिस्तत्र
जहल्लक्षणा यथा विषं भुङ्क्ष्वेत्यत्र स्वार्थं विहाय शत्रुगृहे भोजननिवृत्तिर्लक्ष्यते· यत्र शक्यार्थमन्तर्भाव्यैवार्थान्तरप्रतीतिस्तत्राज॥
हल्लक्षणा यथा शुक्लो घट इत्यत्र हि शुक्लशब्दः स्वार्थं शुक्लगुणमन्तर्भाव्यैव तद्वति द्रव्ये लक्षणया वर्तते· यत्र हि विशिष्टवाचकः।
31 शब्दः एकदेशं विहाय एकदेशे वर्तते तत्र जहदजहल्लक्षणा यथा सोऽयं देवदत्त इति· अत्र हि पदद्वयवाच्ययोर्विशिष्टयोरैक्यानुपपत्त्या प
दद्वयस्य विशेष्यमात्रपरत्वम् यथा वा तत्त्वमसीत्यादौ तत्पदवाच्यस्य सर्वज्ञत्वादिविशिष्टस्य त्वंपदवाच्येनान्तःकरणविशि
ष्टेनैक्यायोगादैक्यसिद्ध्यर्थं स्वरूपे लक्षणेति सांप्रदायिकाः· वयं तु ब्रूमः· सोऽयं देवदत्तः तत्त्वमसीत्यादौ विशिष्टवाचकपदानामेकदे
शपरत्वेऽपि न लक्षणा शक्त्युपस्थितयोर्विशिष्टयोरभेदान्वयानुपपत्तौ विशेष्ययोः॥

°दाहरति· यथेति अत्रास्मिन्वाक्ये अजहल्लक्षणा लक्ष्यति
यत्रेति· शक्यार्थविशिष्टविषया वृत्तिरजहल्लक्षणेत्यर्थः॥ उदाहरति·॥ तृतीयां लक्ष्यति· यत्र हीति· शक्यैकदेशमात्रवृत्तिरित्यर्थः॥ उदाहरणमाह· यथेति· तत्त्वमसीत्यादि
कमपि जहदजहल्लक्षणोदाहरणं सांप्रदायिकैराश्रितमित्याह॥ यथा वेति· वयं तु लक्षणां विनैवैक्यसिद्ध्यर्थमेवं ब्रूम इत्याह· वयं त्विति· ननु लक्षणामन्तरेणैकदे।

वे·प· ॥ नन्विदं क्व दृष्टमित्यपेक्षायामाह· यथेति· स्वतंत्रस्यैवान्वययोग्यत्वाद्यत्र पदार्थैकदेशस्यैव शक्त्यैव स्वातंत्र्येणोपस्थितिः न तत्र लक्षणा यत्तु तस्य शक्त्या विशेष
टी·टी· णतयोपस्थितिस्तत्र तस्य स्वातंत्र्योपस्थितये लक्षणा स्वीक्रियत इत्याह· यत्रेति· उक्तमर्थं प्रकृते योजयति· एवमिति· विपक्षे बाधकमाह॥ अन्यथेति· तर्हि तत्त्वम
३४ स्यादिवाक्ये किमित्याचार्यैर्लक्षणा स्वीकृतेत्याशंक्याह· तत्त्वमसीति· तर्हि जहदजहल्लक्षणोदाहरणाभावात्किं नैवाभ्युपेयेत्याशंक्याह॥ जहदजहल्लक्षणेति·
छत्रिणो यान्तीत्यादिकमादिपदार्थः॥ ननु शक्यैकदेशमात्रवृत्तित्वं ह्येतल्लक्षणं तच्चात्र नायाति श्वादेः काकैकदेशत्वाभावादित्याशंक्यास्मन्मते नेदमेतल्ल-
शक्त्युपस्थितयोरेवाभेदान्वयाविरोधात्· यथा घटोऽनित्य इत्यत्र घटपदवाच्यैकदेशघटत्वस्यायोग्यत्वेपि योग्यघटव्यक्त्या सहानि
त्यत्वान्वयः यत्र पदार्थैकदेशस्य विशेषणतयोपस्थितिः तत्रैव स्वातंत्र्येणोपस्थितये लक्षणाभ्युपगमः यथा घटो नित्य इत्यत्र घटा
पदाद्घटत्वास्य शक्त्या स्वातंत्र्येणानुपस्थित्या नाद्यशोपस्थित्यर्थं घटपदस्य घटत्वे लक्षणा एवमेव तत्त्वमसीत्यादिवाक्येपि न लक्षणा श
क्त्या स्वातंत्र्येणोपस्थितयोस्तत्त्वंपदार्थयोरभेदान्वये बाधकाभावात्॥ अन्यथा गेहे घटः घटे रूपं घटमानयेत्यादौ घटत्वगेहत्वादे
रभिमतान्वयबोधायोग्यतया तत्रापि घटादिपदानां विशेष्यमात्रपरत्वे लक्षणापेवस्यात्· तस्मात्तत्त्वमसीत्यादिवाक्येष्वत्राचार्याणां
लक्षणोक्तिरभ्युपगमवादेन बोध्या· जहदजहल्लक्षणोदाहरणं तु काकेभ्यो दधि रक्ष्यतामित्यादावेव तत्र शक्यकाकपरित्यागेना
शक्यदध्युपघातकत्वपुरस्कारेण काकेऽकाकेपि काकशब्दस्य प्रवृत्तेः लक्षणाबीजं तु तात्पर्यानुपपत्तिरेव न त्वन्वयानुपपत्तिः
काकेभ्यो दधि रक्ष्यतामित्यत्रान्वयानुपपत्तेरभावात्· गंगायां घोष इत्यादौ वतात्पर्यानुपपत्तेरपि संभवात्· क्षणं किं तु शक्याशक्यगो
चरवृत्तित्वं तच्चोक्तोदाहरणेस्तीत्याह· शक्येति· अन्ये तु लक्षणां विना वाच्यैकदेशमात्रपरता पदानां न संभवति॥ गेहे घट इत्यादावपि आधाराधेयाभावेना
न्वितयोर्गेहघटयोस्तदवच्छेदकत्वेन गेहत्वघटत्वयोरन्वयात्॥ तत्त्वमस्यादिवाक्येपि साक्षादवच्छेदकत्वेन वान्वयस्यावश्यकतया खण्डार्थत्वा राम
सिद्धिरित्याहुः· सम्प्रति लक्षणाबीजमाह· लक्षणेति· नत्वन्वयानुपपत्तेस्तद्बीजत्वाभावे कथं गंगायां घोष इत्यत्र लक्षणेत्याशंक्याह· गंगायामिति॥ ३४

यथाशक्तिः पदमात्रवृत्तिस्तथा वृत्तित्वाल्लक्षणापीति नैयायिकास्तान्निराचष्टे लक्षणा चेति· उक्तानुमाने शक्तित्वमुपाधिस्तथाच गंभीरयां नद्यां घोष इत्यादौ नद्यादिपदमात्रे लक्षणायां विनिगमकाभावेन समुदाय एव लक्षणायास्त्वयाप्यवश्यमंगीकार्यत्वात्पदमात्रवृत्तित्वे वृत्तित्वं न नियामकं अपितु शक्तित्वे सति वृत्तित्वं गुरुभूतमपीत्याशयेनाह॥ यथेति· ननु पदस्यैव शक्तत्वेन तदर्थस्य शक्यतया तत्संबंधिन एव लक्ष्यत्वात्कथं वाक्यवृत्तिलक्षणाविषयत्वं वाक्यार्थसंबंधिन इत्याशंकते· नन्विति शक्यशब्देनेह पदनिष्ठशक्तिज्ञाप्यो विवक्षितः। स च पदार्थद्वारा वाक्यार्थोपीति तत्संबंधिन्यपि लक्षणा न विरुध्यत इत्याह उच्यत इति पदेन स्वनि

लक्षणा च न पदमात्रवृत्तिः किंतु वाक्यवृत्तिरपि यथा गंभीरायां नद्यां घोष इत्यत्र गम्भीरायां नद्यामिति पदद्वयसमुदायस्य तीरे लक्षणा ननु वाक्यार्थस्याशक्यतया कथं शक्यसंबंधरूपा लक्षणा· उच्यते· शक्त्या यत्पदसंबंधेन ज्ञाप्यते तत्संबन्धो लक्षणा शक्तिज्ञाप्य॥श्च यथा पदार्थः तथा वाक्यार्थोपीति· न काचिदनुपपत्तिः। एवमर्थवादवाक्यानां प्रशंसारूपाणां प्राशस्त्ये लक्षणा सोरोदीदित्यादिनिंदार्थवाक्यानां निन्दितत्वे लक्षणा अर्थवादगतपदानां प्राशस्त्यादिलक्षणाभ्युपगमे एकेन पदेन लक्षणया तदुपस्थितिसंभवे पदांतरवैयर्थ्यं स्यात् एवं च विध्यपेक्षितप्राशस्त्यरूपपदार्थप्रत्यायकतया अर्थवादपदसमुदायस्य पदस्थानीयतया विधिवाक्येन एकवाक्यत्वं भवतीत्यर्थवादपदानां पदैकवाक्यता क्व तर्हि वाक्यैकवाक्यता यत्र प्रत्येकं भिन्नभिन्नसंसर्गप्रतिपादकयोर्वाक्ययोराकांक्षावशेन महावाक्यार्थबोधकत्वं यथा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादिवाक्यानां समिधो यजतीत्यादिवाक्यानां च परस्परापेक्षितांगांगिबोधकवाक्यतयैकवाक्यता॥०

स्वशक्त्या यज्ज्ञाप्यते तत्संबंधो लक्षणा तथा चेदं लक्षणमुभयसाधारणत्वादावश्यकमित्याह· शक्तिज्ञाप्यश्चेति· यथा लोके तथा वेदेपि बोध्यमित्याह· एवमिति· वायुर्वै क्षेपिष्ठा देवतेत्यादीनामर्थवादवाक्यानां ननु तत्र पदानां लक्षणा कुतो न स्यादित्यत आह· अर्थवादेति· तथा चार्थवादवाक्यास्य विधिनैकवाक्यत्वे पदैकवाक्यत्वव्यवहारस्तेनैव फलित इत्याह· एवञ्चेति· नन्वर्थवादपदसमुदायस्य पदस्थानीयत्वेन स्य विधिवाक्ये नैकवाक्य

तापेक्षिपदैकवाक्यतान्तर्हि वाक्यैकवाक्यतेति॥०॥

वे·प· प्रसंगात्पृच्छति· केति· अर्थवादवाक्यानां स्वार्थतात्पर्याभावेन प्रशस्त्यावबोधकतया स्वार्थावबोधक। वाक्यत्वाभावाद्वाक्यैकवाक्यतायोग्यत्वेपि वाक्यार्थाव-
टी·टी· बोधकयोर्वाक्ययोर्यत्रैकवाक्यत्वं तत्र वाक्यैकवाक्यत्वमित्याह· यत्रेति· तदुदाहरणमाह· यथेति· एकवाक्यताप्रयोजकमाह· परस्परेति· दर्शपूर्णमासा-
३५ भ्यामित्यादिवाक्यानामंगत्वबोधकत्वं समिधो यजति इडा यजतीत्यादिवाक्यानामंगाववबोधकत्वं तदुपबोधकत्वादाकांक्षाविषयत्वं तत्त्वादेकवाक्य-
तेत्यर्थः स्वोक्तेऽर्थे भट्टपादाचार्यवाक्यं संवादयति· तदुक्तमिति· प्रथमं स्वार्थबोधे पर्यवसानं प्राप्तानां वाक्यानामंगांगिभावाद्यपेक्षया पुनर्मिलित्वा-
वाक्यैकवाक्यत्वं संपद्यत इत्यर्थः पदार्थनिरूपणमुपसंहरति· एवमिति· क्रमप्राप्तामासत्तिं लक्षयति· तदिति· पदजन्यपदार्थस्मृतिरित्यर्थः॥ ननु शा-

तदुक्तं भट्टपादैः स्वार्थबोधे समाप्तानामंगांगित्वाद्यपेक्षया वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते इति· एवं द्विविधोपि
पदार्थो निरूपितः तदुपस्थितिश्चासत्तिः· सा च शाब्दबोधे हेतुः तथैवान्वयव्यतिरेकदर्शनात्· एवं महावाक्यार्थबोधेऽवान्तरा-
वाक्यार्थबोधे हेतुः तथैवान्वयाद्यवधारणात्॥ क्रमप्राप्तं तात्पर्यं निरूप्यते· तत्र तत्प्रतीतीच्छयोच्चरितत्वं तात्पर्यम्॥ः॥

ब्दबोध उक्तासत्तिर्हेतुरुत तज्ज्ञानमित्यपेक्षायां सैव हेतुर्न तज्ज्ञानमित्याह· सा चेति· अत्र किं प्रमाणमित्यत आह· तथैवेति· परस्परान्वययोग्यपदार्थो-
पस्थितिसत्त्वे शाब्दबोधो भवति तदभावे नेत्यन्वयव्यतिरेकदर्शनात्· यद्वा मास्त्वासत्तिः शाब्दबोधे हेतुः का हानिरित्याशंक्याह· सा चेति· अत्र मानमा-
ह· तथैवेति· यथा शाब्दबोधे आकांक्षादिकं कारणमेवमाकांक्षादिना जातोवान्तरवाक्यार्थबोधो महावाक्यार्थज्ञाने कारणमित्याह· एवमिति· यतोऽवान्त-
रवाक्यार्थबोधसत्त्वे महावाक्यार्थबोधो भवति· तदभावे शाब्दबोधो नेत्यन्वयव्यतिरेकाववधार्येते अतः स हेतुरित्याह· तथैवेति· क्रमप्राप्तं तात्पर्यं निरू- राम
॥ः॥ पणं प्रतिजानीते· क्रमेति· तत्र निरूपणविषयभूते तात्पर्यसत्ति मौनिश्लोकेऽव्याप्तिदोषं सिद्धवत्कृत्याव्याप्तेरुदाहरणांतरमाह ॥ः॥ः॥ ३५

अर्थेति· ननु तस्यार्थज्ञानरहितत्वेप्यनेन तदर्थप्रतीतीच्छया एतद्वाक्यमुच्चारितमिति तदीयतात्पर्यभ्रमात्तदर्थज्ञानं भविष्यतीत्याशंक्याह· अयमिति· विशेषदर्शने
न भ्रमविरोध्यध्यापकनिष्ठाव्युत्पत्तिज्ञानेन तु मास्तु तात्पर्यज्ञानादेव वाक्यार्थबोधः ईश्वरीयतात्पर्यज्ञानात्स भविष्यतीति तस्य साक्षात्प्रेरकत्वाभावेपि प्रेरकतामात्रे
णोच्चारयितृत्वसंभवादित्याशंक्य परिहरति· न चेति· ईश्वरानंगीकर्तुरपि सांख्यमीमांसकादेर्वैदिकवाक्यार्थप्रत्ययोपलब्धेरित्याह· ईश्वरेति· तर्हि कीदृशं तात्प
र्यं भवतां विवक्षितमित्यपेक्षायामाह॰ उच्यत इति· पदार्थसंसर्गानुभवजननयोग्यत्वमित्यर्थः· अत एव यत्संसर्गप्रतीतिजननयोग्यं वाक्यं प्रयुज्यते तत्तत्पर
मेव व्यवह्रियत इत्याह· गेहे घट इति उक्ततात्पर्यलक्षणस्या [illegible] नेकार्थपदप्रयोगे निव्याप्तिं शंकते· नन्विति· श्वेतो गच्छतीत्यादिवाक्यमादिपदार्थः॥ विशेष

अर्थज्ञानशून्येन पुरुषेणोच्चरिताद्वेदादर्थप्रत्ययाभावप्रसंगात्· अयमध्यापकोऽव्युत्पन्न इति शेषदर्शनेन तत्र तात्पर्यभ्रमस्याप्यभा
वात्· न चेश्वरीयतात्पर्यज्ञानात् तत्र शाब्दबोध इति वाच्यम्· ईश्वरानंगीकर्तुरपि तद्वाक्यार्थप्रतिपत्तिदर्शनात्· उच्यते तत्प्रतीतिजनन
योग्यत्वं तात्पर्यम्· गेहे घट इति वाक्यं गेहघटसंसर्गप्रतीतिजननयोग्यं न तु पटसंसर्गप्रतीतिजननयोग्यमि ति· तद्वाक्यं घटसंसर्गपरं न
तु पटसंसर्गपरमित्युच्यते· ननु सैंधवमानयेत्यादिवाक्यं· यदा लवणानयनप्रतीतीच्छया प्रयुक्तं तदाऽश्वसंसर्गप्रतीतिजनने स्वरूपयो॥
ग्यतासत्वाल्लवणपरत्वज्ञानदशायामप्यश्वादिसंसर्गज्ञानापत्तिरिति चेन्न· तदितरप्रतीतीच्छयानुच्चरितत्वस्यापि तात्पर्यप्रतिविशेष
णत्वात् तथा च यद्वाक्यं यत्प्रतीतिजननस्वरूपयोग्यत्वे सति यदन्यप्रतीतीच्छयानोच्चरितं तद्वाक्यं तत्संसर्गपरमित्युच्यते· शुकादिवाक्ये
३८ व्युत्पन्नोच्चरितवेदवाक्यादौ च तत्प्रतीतीच्छाया एवाभावेन तदन्यप्रतीतीच्छयोच्चरितत्वाभावेन लक्षणसत्वान्नाव्याप्तिः· न चोभयप्रतीती
च्छयोच्चरितेऽव्याप्तिः· तदन्यमात्रप्रतीतीच्छयानुच्चरितत्वास्य विवक्षितत्वात्॥ः॥ णप्रदानेन दोषोद्धारान्नेत्याह· नेति विशेषणप्रदाने फलितं ता

त्पर्यलक्षणमाह· तथा चेति एवं च सैंधवमानयेति वाक्यमश्वप्रतीतिजननयोग्यमपि भोजनप्रकरणे प्रयुक्तत्वाल्लवणान्यप्रतीतीच्छयानुच्चरितान्नेन नाश्व
संसर्गज्ञानजनकमिति भावः· पूर्वोक्ताव्याप्तिदोषग्रस्तत्वमप्युक्तलक्षणस्य नास्तीत्याह· शुकादीति· ननूभयप्रतीतीच्छयानुच्चरिते लक्षणान्यप्रतीतीच्छयानुच्च
रितत्वाभावादव्याप्तिरित्याशंक्य परिहरति· न चेति· उभयप्रतीतीच्छयोच्चरितत्वेन तदन्यमात्रप्रतीतीच्छयानुच्चरितत्वस्य सत्वादित्याह· तदन्यमात्रेति· तदन्यमात्रप्र
तीतीच्छयानुच्चरितत्वमुभयप्रतीतीच्छयोच्चरितत्वमेवेति भावः· न चैवमेकप्रतीतीच्छयोच्चरितेऽव्याप्तिरिति वाच्यम्· तदन्ययावत्प्रतीतीच्छयानुच्चरितत्वमि

त्यर्थस्य तदानीं विवक्षितत्वात्· ननूक्तप्रतीतिजननयोग्य ॥०॥

ताया:किमवच्छेदकंतत्प्रतीतीच्छयोच्चरितत्वमितिचेन्न· अव्युत्पन्नोच्चरितवेदवाक्यात्दोषव्याप्तेरित्याशंक्याह·॥उक्तेति·नचशक्तिकल्पनेगौरवंशक्यं सर्वत्रतस्याएवास्मन्मतेक्लृप्तत्वादित्याह·अस्माकंत्विति· तथाचयथावह्न्यादिनिष्ठदाहादिजनकतावच्छेदकाशक्तिरेवतथातात्पर्य्यनिष्ठशाब्दजनकता वच्छेदिकाशक्तिरेवेति नकोपिविरोधइत्यर्थः ननुतात्पर्य्यस्यशाब्दज्ञानहेतुत्वेतन्निरासपरविवरणवाक्यविरोधइत्याशंक्योक्तरीत्यातात्पर्य्यज्ञानस्यशाब्दज्ञा नहेतुत्वसिद्धौतद्वाक्यमन्यथानेयमित्याह· एवमिति· विपक्षेबाधकमाह· अन्यथेति· तद्वाक्यस्यास्मदुक्ततात्पर्य्यनिराकरणपरत्वे· अभेदरत्नक्लृप्तमताह·वे॥

उक्तप्रतीतिमात्रजननयोग्यतायाश्चावच्छेदिकाशक्तिः अस्माकंतुमतेसर्वत्रकारणतायाःशक्तेरेवावच्छेदकत्वान्नकोपिदोषः एवं। तात्पर्य्यस्यतत्प्रतीतिजनकत्वरूपस्यशाब्दज्ञानजनकत्वेसिद्धेचतुर्थवर्णकेतात्पर्य्यस्यशाब्दज्ञानहेतुत्वनिराकरणवाक्यंतत्प्रतीती। च्छयोच्चरितत्वरूपतात्पर्य्यनिराकरणपरम्· अन्यथातात्पर्य्यनिश्चयफलकवेदान्तविचारवैयर्थ्यप्रसंगात्· केचित्तुशाब्दज्ञा नत्वावच्छेदेननतात्पर्य्यज्ञानंहेतुरित्येवपरं चतुर्थवर्णकवाक्यंतात्पर्य्यसंशयविपर्ययोत्तरशाब्दज्ञानविशेषेचतात्पर्य्यज्ञानं हेतुरेव· इदंवाक्यमेतत्परमुतान्यपरमितिसंशयेतद्विपर्यये चतदुत्तरवाक्यार्थविशेषनिश्चयस्यतात्पर्य्यनिश्चयंविनानुपपत्ते रित्याहुः· नच्चतात्पर्य्यंवेदेमीमांसापरिशोधितन्यायादेवावधार्य्यतेलोकेतुप्रकरणादिना॥

९ चित्त्विति·शाब्दज्ञानमात्रंप्रतिनहेतुरित्य र्थः॥शाब्दज्ञानविशेषंप्रतितु·हेतुरेवेत्याह·तात्पर्य्येति· तादृशशाब्दज्ञानंप्रतीतस्यहेतुत्वम न्वयव्यतिरेकसिद्धमित्याह॥इदमिति॥केचित्पदेनास्मिन्मते स्वस्यानभिमतिः। सूचितातद्वीजंतुशाब्दज्ञानेतात्पर्य्यज्ञानजन्यतावच्छेदकेशाब्दज्ञानत्वेलाघवंतात्पर्य्यसंशयविपर्ययोत्तरशाब्दज्ञानत्वेगौरवम्· तादृश तात्पर्य्यावधारणंकिंवेदेलोकेवाएकमेवोतपृथक् इत्यपेक्षायामाह· नच्चेति·मीमांसापूजितविचारःपूर्वोत्तरभेदेनद्विविधःआदिपदेनोपपदादिकंग्राह्यंलो

तत्रेतिलोकवेदयोर्मध्येवाक्यार्थस्यापूर्वतयामानान्तरानवगमतयातद्वाक्यानांनानुवादकत्वं अथलोकवेदयोःसाम्यांशमाह· तत्रेति· लोकेवेदेचेतितत्रपदविव
रणंगामानयपशुमालभेतेत्यादिकानांकार्य्यपराणांकार्य्ये त्वितिस्वार्थेशक्तानांयथाप्रामाण्यंतथासिद्धवस्तुपराणामपिप्रामाण्यंनतुप्राभाकाराणामिव।
कार्यपराणामेवेत्यर्थः तत्रहेतुमाह· पुत्रइति· अन्यथावेदान्तवाक्यानांब्रह्मणिप्रामाण्यंनस्यादित्याह अतएवेति· यतएवसिद्धार्थानांवाक्यानांप्रामाण्यमतएवं।
त्यर्थः।नन्वस्तुकार्य्यपराणामेवप्रामाण्यंवेदान्तानामपिप्रातिविधिपरत्वेनतद्भविष्यतितस्मात्किमर्थंक्लिष्टकल्पनयासिद्धार्थेपदानांसामर्थ्यमास्थी
यतइत्याशंक्याह· यथाचैतदिति· सिद्धार्थेपदानांसामर्थ्यावधारणात् यथाकार्य्यसंस्पर्शमनन्तरेणब्रह्मणिवेदान्तानांप्रामाण्यंतथेत्यर्थः॥ स्वाभिमतंवेदप्रा
माण्यंदर्शयितुंनैयायिकमीमांसकयोर्मतेदर्शयति· तत्रेति· लोकवेदयोर्मध्येकर्तृदोषादप्रामाण्यप्रसक्तिमाशंक्योक्तं· सर्वज्ञेति· सर्वज्ञत्वंमन्वादीनामप्य।

तत्रलौकिकवाक्यानान्तरस्वगतार्थानुवादकत्वंवेदेतुवाक्यार्थस्यापूर्वतयानानुवादकत्वं· तत्रलोकेवेदेचकार्य्यपराणामिवसि
द्धार्थानामपिप्रामाण्यंपुत्रस्तेजातइत्यादिषुसिद्धार्थेपिपदानांसामर्थ्यावधारणात्· अतएववेदान्तवाक्यानांब्रह्मणिप्रमाण्यंय॥
याचैतत्तथाविषयपरिच्छेदेवक्ष्यतेतत्रवेदानांनित्यसर्वज्ञपरमेश्वरप्रणीतत्वेनप्रामाण्यमितिनैयायिकाःवेदानांनित्यत्वेन।
७ निरस्तसमस्तपुंदूषणतयाप्रामाण्यमित्यध्वरमीमांसकाः अस्माकंतुमतेवेदोननित्यउत्पत्तिमत्त्वात्उत्पत्तिमत्त्वंचास्यमहतोभूत।
स्यनिश्वसितमेतद्यदृग्वेदइत्यादिश्रुतेःनापिवेदानांत्रिक्षणावस्थायित्वंयएववेदोदेवदत्तेनाधीतःसएववेदोमयाधीतइत्यादिप्रत्यभिज्ञा
विरोधात्·अतएवगकारादिवर्णानामपिनक्षणिकत्वसोयंगकारइतिप्रत्यभिज्ञाविरोधात् स्यन्त्यउक्तंनित्येतिप्रणीतत्वाभिधानेनस्वमतान्द्वैलक्षण्यं॥
वोधितंस्वमतेवेदस्योत्पत्तिमत्त्वेपिवेदःकल्पान्तरीयानुपूर्वीविजातीयानुपूर्वीकईश्वरप्रणीतइत्यनंगीकारात्· नित्यत्वेनेति· वेदानामनित्यत्वाभ्युपगमेपुंप्र।
णीतत्वावश्यंभावात्तस्येश्वरत्वेपिभक्तपक्षपातादिसंभवाद्वौद्धप्रणीतागमवद्वेदेपिदोषप्रसंगात्तस्यनित्यत्वेननिरस्तसमस्तपुंदूषणतयाप्रामाण्यमित्यर्थः पु२
स्वमतमाह। अस्माकंत्विति· तुशब्दउक्तपक्षाभ्यांवैलक्षण्यद्योतनार्थः।तत्त्वंचानित्यत्वेपिप्रवलयकालपर्य्यन्तावस्थायित्वेसतिदोषविनिर्मुक्तत्वं।तच्चै पु२
श्रुतिसिद्धमतोनस्वरूपासिद्धोहेतुरित्याह· उत्पत्तिमत्त्वंचेति· ऋचःसामानिजज्ञिरेतस्मादित्यादिश्रुतिरादिपदार्थः वेदोननित्यइत्युक्तेः॥ नैयायिकाभिः॥

॥उत्पत्तिमत्त्वंच॥२॥

मतत्रिक्षणावस्थापित्वंवेदानांकिंनवाप्यनुमतमित्यपेक्षायांयथायादृशम्मीमांसकाभिमतंवेदानामत्तेषांनित्यत्वंयथास्मदननुमतंतथानैयायिकाभिमतंन
दमतंतंत्रिक्षणावस्थायित्वमपितथामपीत्याह॥नापीति·वर्णसमुदायमभिवेदस्यस्वरूपतःक्षणिकत्वमयावत्वर्णद्वारापितन्निराकरोति·अतएवेतियतः।
प्रत्यभिज्ञाविरोधाद्वेदानामक्षणिकत्वम् अतएवसोयमित्यादिप्रत्यभिज्ञाविरोधाद्वर्णानानिक्षणिकत्वमित्यर्थः॥नन्वेवंतर्हिकथंवेदानामुत्पत्तिमत्त्वंतता।
श्चानित्यत्वमित्याशंक्याह·तथाचेति·वेदानांस्वरूपतोवर्णद्वाराचक्षणिकत्वाभावेसतिनन्वेवंतर्हिवर्णानामभिव्यक्तिःकुतोनेत्याशंक्याहानुच्चारणेति·ननूत्प।

तथाचवर्णपदवाक्यसमुदायस्यवेदस्यवियदादिवत्·सृष्टिकालिनोत्पत्तिमत्त्वंप्रलयकालीनध्वंसप्रतियोगित्वंचनतुमध्येवर्णा।
नामुत्पत्तिविनाशावनेकगकारकल्पनेगौरवात्·अनुच्चारणदशायांवर्णानामनभिव्यक्तिस्तदुच्चारणरूपव्यंजकाभावान्नविरुध्य
ते·अन्धकारस्थलेघटानुपलंभवदुत्पन्नोगकारइत्यादिप्रत्ययःसोयंगकारइतिप्रत्यभिज्ञाविरोधादप्रमाणंवर्णाभिव्यक्तिजनक
ध्वनिगतोत्पत्तिनिरूपितपरम्परासम्बन्धविषयत्वेनप्रामाणंवा·तस्मान्नवेदानांक्षणिकत्वं·ननुक्षणिकत्वाभावेपिवियदादिप्र
पंचवदुत्पत्तिमत्त्वेनपरमेश्वरकर्तृकतयापौरुषेयत्वादपौरुषेयत्वंच·वेदानामिति तवसिद्धांतोभज्येतेति· चेन्न। हितावत्पु
रुषेणोच्चार्यमाणत्वंपौरुषेयत्वंगुरुमतेपि·अध्यापकपरंपरयापौरुषेयत्वापत्तेः नापिपुरुषाधीनोत्पत्तिकत्वंपौरुषेयत्वम्॥

न्नोगकारोनष्टोगकारइतिप्रत्ययान्मध्येप्युत्पत्त्यादिकंकथंनास्वीयतइत्याशंकापरिहरतिउत्पन्नइति·वर्णेति·श्यामोघटोनष्टोरक्तो·घटउत्पन्नइति·प्रतीति
वदुत्पत्तिविनाशवद्ध्वनिसंबंधादुक्तप्रत्ययःपरम्परासंबंधिविषयत्वात्प्रमाणंचेत्यर्थः·उपसंहरति·तस्मादिति·अथापसिद्धांतंमीमांसकःशंकते·नन्विति·अ
स्माकंमतेवेदानामुत्पत्तिमत्त्वेपिपौरुषेयत्वाभावान्नायंसिद्धांतइत्याशयेनाह·नेति किंविधंपौरुषेयत्वमभिप्रेत्यास्मन्मते तदापाद्यते किंपुरुषेणोच्चार्यमा।
णत्वं·किंवापुरुषाधीनोत्पत्तिकत्वमिति·विकल्प्याद्यम्निराकरोति·नशक्ति·मौनिश्लोकादेरपौरुषेयत्वापत्तिरपिबोध्या द्वितीयमन्याह· नापिति·॥ ॥ ॥:॥

वेदाः पौरुषेया वाक्यत्वाद्भारतादिवदिति नैयायिकाभिमतपौरुषेयत्वानुमाने ऽस्मदाद्यभ्युपेतपौरुषेयत्वसाधनादस्मदादिना सिद्धसाधनतापत्तेरित्या
ह· नैयायिकेति· तर्हि किंविधं पौरुषेयत्वं यद्भावाद्भवतां मत उत्पत्तिमतां वेदानामपौरुषेयत्वं सिद्ध्यतीत्याशंक्य परिहरति· किंत्विति· सजातीयोच्चारणस्यान·
२ त पेक्षा प्रसक्तत्वं तथाविधोच्चारणस्य विषयत्वमित्यर्थः ॥ तथा चोक्तविधे पौरुषेयत्वे सति इति उक्तहेतोर्नोक्तपौरुषेयत्वं वेदस्येत्यर्थः ॥ अस्ति च पौरुषेये
ष्वेतल्लक्षणमित्याह· भारतादीनां त्विति ॥ इति श्रीपरमहंसपरिव्राजकाचार्य्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसू
रिसूरितशिवदत्तविरचितायां वेदान्तपरिभाषार्थदीपिकायामागमपरिच्छेदः ॥ ॥ ॥ अथागमनिरूपणानंतरमर्थापत्तिनिरूपणं प्रतिजानीते·

॥ नैयायिकाभिमतपौरुषेयत्वामाने ऽस्मदादिना सिद्धसाधनत्वापत्तेः किंतु सजातीयोच्चारणानपेक्षोच्चारणविषयत्वम् त
थाच सर्गाद्यकाले परमेश्वरः पूर्वसर्गसिद्धवेदानुपूर्वीसमानानुपूर्वीकं वेदं रचितवान् न तु तद्विजातीयं वेदमिति न सजातीयो
च्चारणापेक्षोच्चारणविषयत्वं वेदानां भारतादीनां तु सजातीयोच्चारणमनपेक्ष्यैवोच्चारणमिति तेषां पौरुषेयत्वम् ए
वं पौरुषेयापौरुषेयभेदेनागमो द्विधा निरूपितः ॥ ॥ ॥ इति वेदान्तपरिभाषायामागमपरिच्छेदः ॥ ॥ इदानीमर्था
७४ पत्तिर्निरूप्यते ॥ तत्रोपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिः ॥ तत्रोपपाद्यज्ञानं करणं उपपादकज्ञानं फलं ॥ येन विना
यदनुपपन्नं तत्तत्रोपपाद्यं यस्याभावे यस्यानुपपत्तिस्तत्तत्रोपपादकम् ॥ यथा रात्रिभोजनेन तु विना दिवाऽभुंजानस्य पीनत्व
मनुपपन्नमिति तादृशपीनत्वमुपपाद्यं ॥ इदानीमिति· ॥ तत्रार्थापत्तेरागमनिरूपणानंतरनिरूपणविषयत्वे सति प्रमाकरणस्य प्रमाणत्वात्प्रमारूपा
र्थापत्तेर्लक्षणमाह· उपपाद्येति· उपपादकज्ञानं करणमुपपाद्यज्ञानं फलमिति भ्रमव्यावृत्त्यर्थमाह ॥ तत्रेति· तयोर्ज्ञानद्वयोर्मध्ये उपपादकाभावव्याप·
काभावप्रतियोगित्वमुपपाद्यत्वमित्युपपाद्यलक्षणमाह· येनेति· तत्रेति· तेनेत्यर्थः· उपपाद्याभावव्याप्याभावप्रतियोगित्वमित्युपपादकलक्षणमाह· य·
स्येति· तत्रेति तस्येत्यर्थः ॥ उपपाद्योदाहरणमाह· ॥ यथेति· उपपादकोदाहरणमाह· ॥ यथा वेति· प्रमितावर्थापत्तिशब्दप्रवृत्तिनिमित्तमाह· ॥ ॥

रात्रिभोजनेति।७॥

वे०प० रात्रीति तत्कारणेतन्निमित्तमाह· कल्पनेति· एवंलक्षणलक्षितांतां विभजे· साचेति अर्थापत्तिनिरूपणस्यप्रपंचमिथ्यात्वादिसिद्ध्यर्थत्वात्तदनुरूपमु
टी०टी० दाहरणंवक्तव्यमित्याशयेनाह· दृष्टार्थापत्तियथेति· प्रतिपन्नस्यप्रतीतस्यतत्रैवपुरोवर्तिन्येवसत्यत्वेरजतस्येति संबध्यते अनुपपन्नमितिहेतो· निषिध्य
३८ मानत्वंरजतस्यमिथ्यात्वंकल्पयति· किंतदित्यतआह· सद्भिन्नत्वमिति· मीमांसकमतानुसारेणाह· यथावेति· तत्रद्वयोर्मध्येपदाध्याहारमतमनु

यथावारात्रिभोजनस्याभावेतादृशपीनत्वस्यानुपपत्तिरितिरात्रिभोजनमुपपादकं· रात्रिभोजनकल्पनारूपायांप्रमितावर्थस्या
पत्तिःकल्पनेति· षष्ठीसमासेनअर्थापत्तिशब्दोवर्तते कल्पनाकरणपीनत्वादिज्ञानेत्वर्थस्यापत्तिः कल्पनायस्मादितिबहुव्रीहिस
मासेनवर्त्ततेइतिफलकरणयोरुभयोस्तत्प्रयोगः साचार्थापत्तिर्द्विविधादृष्टार्थापत्तिःश्रुतार्थापत्तिश्चेति· तत्रदृष्टार्थापत्ति
र्यथाइदंरजतमितिपुरोवर्तिनिप्रतिपन्नस्यरजतस्यनेदंरजतमिति· तत्रैवनिषिध्यमानत्वंसत्वेऽनुपपन्नमिति रजतस्यसद्भि
न्नत्वंसत्यत्वात्यंताभाववत्वंवामिथ्यात्वंकल्पयतीति· श्रुतार्थापत्तिर्यथा यत्रश्रूयमाणवाक्यस्यस्वार्थानुपपत्तिमुखेनार्थांतरक
ल्पनंयथातरतिशोकमात्मविदित्यत्रश्रुतस्यशोकशब्दवाच्यबंधजातस्यज्ञाननिवर्त्यत्वस्याऽन्यथाऽनुपपत्त्याबंधस्यमिथ्यात्वंक॥
ल्प्यतेयथावाजीवीदेवदत्तोगृहेनेतिवाक्यश्रवणानंतरंजीविनोगृहासत्ववहिःसत्वंकल्पयति· श्रुतार्थापत्तिश्चद्विविधाअभिधा।
नानुपपत्तिरभिहितानुपपत्तिश्च· तत्रयत्रवाक्यैकदेशश्रवणेऽन्वयाभिधानानुपपत्त्यान्वयाभिधानोपदांतरंकल्प्यतेतत्राभिधाना
नुपपत्तिर्यथाद्वारमित्यत्रपिधेहीत्यध्याहारः यथावाविश्वजितायजेतेत्यत्रस्वर्गकामपदाध्याहारः ननुद्वारमित्यादावन्वयाभिधाना
त्पूर्वमिदमन्वयाभिधानंपिधानोपस्थापकपदंविनानुपपन्नमिति· कथंज्ञानमितिचेन्न· अभिधानपदेनकरणव्युत्पत्त्यातात्पर्यस्य विवक्षितत्वात्॰॥

त्याह· यथेति· वैदिकोदाहरणमाह· यथावेति· चतुर्थाध्यायस्थेसः स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वादितिसूत्रेस्वर्गकाम पदाध्याहारस्यदर्शितत्वादितिभा त्याह॥
वः ननुद्वारकर्मकपिधानमित्यन्वयाभिधानात्प्राक्पिधानोपस्थापकंपदंविनाद्वारमित्यन्वयाभिधानंनोपपद्यतइतिकथंज्ञानमितिशंकते· नन्विति· अत्रभा एम
वव्युत्पत्तिर्नाभिप्रेतेतिपरिहरति· नेति· अभिधीयतेनेनेतिकरणव्युत्पत्त्याभिधानपदेनतात्पर्यस्यविवक्षितत्वात्तात्पर्यस्यविवक्षितत्वेसतीदंसमाधानंफलितमि ३८
त्य

ज्ञानस्य ४॥

तथा चेति· हूरकर्मकक्रियासंसर्गावबोधनतात्पर्येणानेन हूरमित्युच्चरितमिति ज्ञानवतोन्वयाभिधानात्पूर्वावस्थायामपि तथा ज्ञानं संभाव्यत इत्यर्थः· द्वितीयाक्व दृष्टेत्य· पेक्षायामाह· अभिहितेति· तत्रापि कचेत्यत आह· यथा स्वर्गकाम इति· नैयायिकमतमाशंक्य परिहरति· नचेति· अर्थापत्तेरन्वयिन्यंतर्भावः किंवा व्यतिरेकिणी ति विकल्प्याद्यं प्रत्याह· अन्वयेति· द्वितीयं निराचष्टे· व्यतिरेकिण इति· अनुमिनोमीत्यनुव्यवसायाभावोपि व्यतिरेकिणोनुमानत्वेनुपपन्न इत्याह· अत एवेति· यतो व्यतिरेकिणोनुमानता नास्त्यत एव कीदृशस्तस्यानुव्यवसाय इत्याशंक्याह· किंत्विति· तथा चार्थापत्तेरावश्यकत्वान्न गौरवमाशंकनीयमिति भावः॥ नन्विदमनेना विनानुपपन्नमिति ज्ञानं व्यतिरेकव्याप्तिज्ञानमेव उतान्यत्· आद्ये तस्यानुमितिं प्रतिप्रतिक्लृप्तकरणत्वेनानुमानत्वापत्तिः नहि द्वितीयस्तस्य निरूपयितुमशक्यत्वादि

तथा चहूरकर्मकपिधानक्रियासंसर्गपरत्वंपिधानोपस्थापकपदं विनानुपपन्नमिति ज्ञानं तत्रापि संभाव्यते· अभिहितानुपपत्तिस्तु यत्र वाक्यावगतोर्थोनुपपन्नत्वेन ज्ञातः सन्नर्थांतरं कल्पयति तत्र द्रष्टव्या यथा स्वर्गकामो ज्योतिष्टोमेन यजेतेत्यत्र स्वर्गसाधनत्वस्य क्षणिकतया साक्षात् यागगतस्यानुपपत्त्या मध्यवर्त्यपूर्वं कल्प्यते· नचेयमर्थापत्तिरनुमानेंतर्भवितुमर्हति· अन्वयव्याप्त्यज्ञानेनान्वयित्वानंतर्भावात्· व्यतिरेकिणश्चानुमानत्वं प्रागेव निरस्तं· अत एवार्थापत्तिस्थले ऽनुमिनोमीति नानुव्यवसायः किंतु अनेनेदं कल्पयामीति· नन्वर्थापत्तिस्थले इदमनेन विनानुपपन्नमिति ज्ञानं करणमित्युक्तं तत्र किमिदं तेन विनानुपपन्नत्वं तदभावव्यापकाभावप्रतियोगित्वमिति ब्रूमः एवमर्थापत्तेर्मानांतरत्वे सिद्धे व्यतिरेकिनानुमानांतरं पृथिवी इतरेभ्यो भिद्यते· इत्यादौ गंधवत्वमितरभेदं विनानुपपन्नमित्यादिज्ञानस्य करणत्वात्· अत एवानुव्यवसायः पृथिव्यामितरभेदं कल्पयामीति॥३॥ इति वेदांतपरिभाषायामर्थापत्तिपरिच्छेदः॥

त्याशयेनाशंकते· नन्विति· अस्तु वा व्यतिरेकव्याप्तिज्ञानमेतत् तथापि तथाविधानुव्यवसायबलादर्थापत्तिकरणत्वमविरुद्धं तस्यानुमितिकरणत्वं दूषितं चेत्याशयेनाह· तदभावेति· एवमर्थापत्तेरावश्यकत्वाद्व्यतिरेकिणोनुमानत्वं न कल्पनीयमित्याह· एवमिति· तर्हि तदुदाहरणेषु कागतिरित्याशंक्य हेतुमाह· पृथिवीति· पृथिवीतरेभ्यो भिद्यते गंधवत्वाद्यन्नैवं तन्नैवं यथा जलमित्यादौ अत्राप्यर्थापत्तित्वसाधको ऽनुव्यवसाय इत्याह· अत एवेति॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिसुतशिवदत्तकृतायां वेदांतपरिभाषार्थदी

॥अर्थापत्तिपरिच्छेदः ३॥

७७

वेदांतपरिभाषाटी॰ ३६॥

वे·प· अथ क्रमप्राप्तानुपलब्धिप्रमाणनिरूपणं प्रतिजानीते इदानीमिति तल्लक्षणमाह ज्ञानेति· अजन्यान्तं ज्ञानकरणाजन्येति पदं भावानुभवकरणे चक्षुरादावतिव्या
टी·टी· प्तिवारणाय अभावपदमित्यभिप्रेत्य असाधारणपदव्यावर्त्यमाह· अदृष्टादाविति· ननु ज्ञानपदं विहायानुभवपदप्रदाने किं फलमित्याशंक्याह· अभावेति· अजन्यान्त॥
३८ स्य वैयर्थ्यमाशंक्य परिहरति· नचेति· अभावग्राहकयोग्यानुपलब्धेरभावानुमितिस्थलेऽभावादित्याह धर्मेति· षष्ठीसप्तमीसमासयोः संभवादुभयत्र च दोष स

इदानीं षष्ठं प्रमाणं निरूप्यते· ज्ञानकरणाजन्याभावानुभवासाधारणकारणमनुपलब्धिरूपं प्रमाणं अनुमानजन्यातींद्रियाभावानुभवहेताव।
नुमानादावतिव्याप्तिवारणायाजन्यान्तं पदम्· अदृष्टादौ साधारणकारणे अतिव्याप्तिवारणाय असाधारणेति पदं· अभावस्मृत्यसाधारणहे
तौ संस्कारे अतिव्याप्तिवारणायानुभवेति विशेषणम्· न चातींद्रियाभावानुमितिस्थलेप्यनुपलब्ध्यैवाभावो गृह्यतां विशेषाभावादिति वाच्यम्· ध
र्माधर्माद्यनुपलब्धिसत्त्वेपि तदभावानिश्चयेन योग्यानुपलब्धेरेवाभावग्राहकत्वात्· ननु केयं योग्यानुपलब्धिः· किं योग्यस्य प्रतियोगिनोऽनु
पलब्धिः उत योग्याधिकरणे प्रतियोग्यनुपलब्धिः· नाद्यः स्तंभे पिशाचादिभेदस्याप्रत्यक्षत्वापत्तेः· नान्त्यः आत्मनि धर्माधर्माद्यभावस्यापि
प्रत्यक्षतापत्तेरिति चेन्न· योग्या चासावनुपलब्धिश्चेति कर्मधारयाश्रयणात्· अनुपलब्धेर्योग्यता च तर्कितप्रतियोगिसत्त्वप्रसंजितप्रतियोगि
कत्वं यस्याभावो गृह्यते तस्य यः प्रतियोगी तस्य सत्त्वेनाधिकरणे तर्कितेन प्रसंजनयोग्यमापादनयोग्यं यत्प्रतियोग्युपलब्धिस्वरूपं यस्यानुपलं
भस्य तदनुपलब्धेर्योग्यत्वमित्यर्थः· तथाहि स्फीतालोकवति भूतले यदि घटः स्यात्तदा घटोपलंभः स्यादित्यापादनसंभवात्तादृशभूतले
घटाभावोनुपलब्धिगम्यः· अंधकारे तु तादृशापादनासंभवान्नानुपलब्धिगम्यता· अत एव स्तंभे पिशाचसत्त्वे स्तंभवत्प्रत्यक्षतापत्त्या ति
द्भावोनुपलब्धिगम्यः· आत्मनि धर्मादिसत्त्वेप्यस्यातींद्रियतया निरुक्तोपलंभापादनासंभवात्· न धर्माद्यभावस्यानुपलब्धिगम्यत्वम्·

द्भावाच्छंकते· नन्विति· कर्मधारयसमासमाश्रित्य परिहरति· योग्येति· अनुपलब्धियोग्यत्वं किमित्यपेक्षायामाह· अनुपलब्धेरिति· यद्यत्र घटः स्यादिति त॥
र्कितेन प्रतियोगिसत्त्वेन तर्ह्युपलभ्येते[illegible]ति प्रसंजितः घटोपलंभलक्षणः प्रतियोगी यस्यानुपलंभस्य स तथा तस्य भावस्तत्त्वमित्यभिप्रेत्यैतदर्थमाह यस्येति· अ राम
थोदाहरणमनुदाहरणाभ्यामुक्तं स्फुटयति· तथाहीति· स्फीतो विशालः पक्षद्वयोक्तदोषाभावमाह॥ अत एवेति· यत एवंभूतयोग्यानुपलब्धिसमाश्रयणम ३८

अन्यथासिद्धेरितिहेतुः॥५॥

नैयायिकः शंकते· नन्विति· तत्रतादृशस्थले क्लृप्तसंभवे पूर्वकल्पनमन्याय्यं गौरवादित्यर्थः इन्द्रियसत्वे भावज्ञानतदभावे तदभावइत्यन्वयव्यतिरेकयोरनुविधानादनुरोधतः नास्तिममगौरवंप्रत्युततवैवमहद्गौरवमित्याशयेनसमाधत्ते· नेति· संयुक्तविशेषणतासंबंधस्यानंगीकारात्प्रमाणशून्यत्वाच्चेत्यभिप्रेत्याह· इन्द्रियस्येति· ननुसन्निकर्षाभावप्रयुक्तहेतुत्वाभावोऽसिद्धइन्द्रियान्वयव्यतिरेकवेलेनतस्यकल्प्यत्वादित्याशंक्याह· इन्द्रियेति· अन्यथासिद्धःसन्निकर्षादिविनैवसार्थक्यात· आदिपदेनप्रतियोगिज्ञानसंग्रहः। अभावेनसमंसन्निकर्षाभावेऽथहेतुः ननुभवतिसिद्धांतेप्यभावप्रमायाःप्रत्यक्षत्वेवसमायात्य

ननूक्तरीत्याधिकरणेन्द्रियसन्निकर्षस्थलेऽभावस्यानुपलब्धिगम्यत्वमनु तेतत्रक्लृप्तेन्द्रियमेवाभावाकारवृत्तावपिकरणंइन्द्रियान्वयव्यतिरेकानुविधानादितिचेन्न· तत्प्रतियोग्यनुपलब्धेरपि· अभावग्रहेहेतुत्वेनक्लृप्तत्वेनकरणत्वमात्रस्यकल्पनात् इन्द्रियस्यचाभावेनसमंसन्निकर्षाभावेनभावग्रहाहेतुत्वात् इन्द्रियान्वयव्यतिरेकयोरकरणज्ञानाद्युपक्षीणत्वेनान्यथासिद्धेः ननुभूतलेघटोनेत्याद्यभावानुभवस्थलेभूतलांशेप्रत्यक्षत्वमुभयसिद्धमिति तत्रवृत्तिनिर्गमनस्यावश्यकत्वेनभूतलावच्छिन्नचैतन्यवत॥
न्निष्ठघटाभावावच्छिन्नचैतन्यस्यापिप्रमातृभिन्नतयाघटाभावस्यप्रत्यक्षतैवसिद्धांतेपीतिचेत् सत्यंअभावप्रतीतेःप्र॥
त्यक्षत्वेपितत्करणस्यानुपलब्धेर्मानांतरत्वात् नहिफलीभूतज्ञानस्यप्रत्यक्षत्वेतत्करणस्यप्रत्यक्षप्रमाणतानियततत्वमस्ति।
दशमस्त्वमसीत्यादिवाक्यजन्यज्ञानस्यप्रत्यक्षत्वेपितत्करणस्यवाक्यस्यप्रत्यक्षप्रमाणभिन्नप्रमाणत्वाभ्युपगमात्॥ ॥

तःकथंतत्करणानुपलब्धिरितिशंकते· नन्विति· आदिपदेनस्तंभेपिशाचोनेत्यादिसंग्रहः॥ तच्चतादृशेस्थले तन्निर्देशभूतलनिष्ठःअर्द्धांगीकारेणपरिहरति।
सत्यमिति· यद्यप्यभावस्यप्रत्यक्षत्वयोग्यत्वाभावाच्छब्दजन्यत्वनिष्ठधर्मादिज्ञानस्यप्रत्यक्षत्वंप्रत्यक्षलक्षणेयोग्यत्वस्यापिविषयविशेषणत्वेनोक्तत्वात्।
तथाप्यभावज्ञान प्रत्यक्षाप्रत्यक्षत्वयोर्नतद्योग्यायोग्यत्वेतंत्रेकिंतुप्रतियोगियोग्यायोग्यत्वे· तथाचानुपदमेवास्यार्थस्यस्पष्टीकृतत्वात्· अभावज्ञानप्रत्य
॥ ॥ ॥ ॥ ॥ ॥क्षत्वेनाभ्युपेत्यैवाद आश्रयणीयः ननुतेषांप्रत्यक्षत्वेकथंतत्करणस्यमानांतरत्वमितितत्राह· नहीति॥ ॥ ॥ ॥ ॥

अभाववृत्तस्यप्रत्यक्षत्वेयोगित्वमंगीकृत्याभावज्ञानप्रत्यक्षत्ववादः॥१॥

40

अभावस्यप्रत्यक्षत्वयोगित्वमंगीकृत्या भावज्ञानप्रत्यक्षत्ववादः १ २ अनुपलब्धि
अभावप्रतीतेः १

मा२

ननुप्रमाणभेदस्य फलभेदायत्तत्वात्कथं तं विना तस्य सिद्धिरित्याशङ्कते· फलेति· प्रत्यक्षत्वेन फलस्य साजात्येपि भूतलाकारवृत्तेरिन्द्रियजन्यत्वा द्भावाकारवृत्तेस्तदजन्यत्वाद्वृत्तिवैजात्यमात्रेण तदुपपत्तेर्मैवमित्याह· नेति फलितमाह· तथा चेति· वृत्तिवैजात्यमात्रेण प्रमाण[illegible]वैजात्ये· अ[illegible]थाभावभ्रमे दोषमाशङ्कते· नन्विति· तत्रानिर्वचनीयघटाभावोनाभ्युपगम्यते तेनोनोक्तदोषइत्याह· नेति· नन्वेवं तर्हि कथं घटाभावाभ्रमस्य प्रत्यक्षत्वमित्याशङ्कते· किं॥०

फलवैजात्यं विना कथं प्रमाणभेद इति चेन्न· वृत्तिवैजात्यमात्रेण प्रमाणवैजात्योपपत्तेः तथा च· घटाद्यभावाकारवृत्तिर्नेन्द्रियजन्या इन्द्रियस्य विषयेणासन्निकर्षात्· किंतु घटानुपलब्धिरूपमानांतरजन्या इति भवत्यनुपलब्धेर्मानांतरत्वम्· नन्वनुपलब्धिरूपमानांतरपक्षेप्यभावप्रतीतेः प्रत्यक्षत्वे घटवति घटाभावभ्रमस्यापि प्रत्यक्षत्वापत्तौ तत्राप्यनिर्वचनीयघटाभावोभ्युपगम्येत न चेष्टापत्तिः तस्य मायोपादानकत्वे ऽभावत्वानुपपत्तेः मायोपादानकत्वाभावे मायायाः सकलकार्योपादानत्वानुपपत्तिरिति चेन्न· घटवति घटाभावभ्रमो न त्वकालोत्पन्नघटाभावविषयकः किंतु भूतलरूपादौ विद्यमानो लौकिको घटाभावो भूतले आरोप्यत इत्यन्यथाख्यातिरेवारोप्यसन्निकर्षस्थले सर्वत्रान्यथाख्यातेरेव व्यवस्थापनात्· अस्तु वा प्रतियोगिमति तदभावभ्रमस्थले तदभावस्यानिर्वचनीयत्वम्· तथापि तदुपादानं मायैव न ह्युपादानोपादेययोरत्यंतसाजात्यं तंतुपटयोरपि तंतुत्वपटत्वादिना वैजात्यात्· यत्किंचित्साजात्यस्य मायाया अनिर्वचनीयस्य घटाभावस्य च मिथ्यात्वधर्मस्य विद्यमानत्वात्· अन्यथा व्यावहारिकघटाद्यभावप्रतिकथं मायोपादानमिति कुतो नाशंकेथाः॥

न्विति· तद्विषयस्य सन्निहितत्वेन तत्संभवान्नैवमित्याह· भूतलेति· आदिपदेन क्रियादिसंग्रह· अपसिद्धान्तमाशंक्याह· आरोप्येति· ननु घटाधिकरणभूतलरूपा[illegible]न्द्रियासन्निकृष्टत्वात्कथं तद्गतस्याभावो त्रारोप्यत इत्याशंक्यानिर्वचनीयत्वमंगीकृत्य समाधत्ते· अस्तु वेतिप्रोक्तदूषणमुद्धरति· नहीति· ननु तयोः सर्वाकारेण साजात्याभावेपि यत्किंचित्साजात्यमवश्यमभ्युपेयम्· अन्यथोपादानोपादेयत्वव्याघातादित्याशं॥ क्याह· यत्किंचिदिति· अन्यथा ऽभावस्य मायोपादानासंभवे॥०॥

दि निष्ठ घटाभावादेरिं ३

नन्वेवंब्रह्मणएवजगदुपादानत्वसंभवात्किमर्थंमायाकल्प्यतइत्याशंक्यपरिहरति· नचेति· किंब्रह्मणोजगदुपादानत्वमनिष्ठमापाद्यते· किंवामायावैय
र्थ्यमिति विकल्प्याद्यंप्रत्याह· प्रपंचेति· द्वितीयंप्रत्याह· परिणामित्वरूपस्येति· तथाच· निरवयवेब्रह्मणिपरिणामस्यानुपपन्नत्वे· प्रासंगिकसमाप्यानुपलब्धि
प्रमाणविषयमभावंविभजते· सचेति· तत्रतेषुकार्यसमवायिकालान्यावृत्तित्वेसतिकार्योत्पत्तिपूर्वकालनत्वंप्रागभावलक्षणमभिप्रेत्याह· मृत्पिंडेति· त
द्विषयकप्रत्ययस्वरूपमाह· सचेति· प्रागभावः घटोभाविष्यतीतिप्रत्ययः घटप्रागभावंविषयीकरोति द्वितीयंलक्षयति· तत्रैवेतितत्रमृत्पिंडादौकार्यसम
वायिकालान्यावृत्तिप्रतियोग्यजनकः ध्वंसभावः सचविनष्टइति प्रत्ययगोचरइत्यपिज्ञेयम· तस्यानंतवत्वंतार्किकमतनिरासायाह· ध्वंसस्यापीति·।

नचविजातीययोरप्युपादानोपादेयभावेब्रह्मैवजगदुपादानंस्यादितिवाच्यम· प्रपंचविभ्रमाधिष्ठानत्वरूपेणतस्येष्टत्वात्परि
णामित्वरूपस्योपादानत्वस्यनिरवयवब्रह्मण्यनुपपत्तेः तथाच· प्रपंचस्यपरिणाम्युपादानंमायानब्रह्म इतिसिद्धांतइत्य
लमतिप्रसंगेनसचाभावश्चतुर्विधः प्रागभावः प्रध्वंसाभावोऽत्यंताभावोऽन्योन्याभावश्चेति· तत्रमृत्पिंडादौकारणेकार्यस्यघ
९१ टादेरुत्पत्तेः पूर्वंयोभावः सप्रागभावः सचभविष्यतीतिप्रतीतिविषयः तत्रैवघटस्यमुद्गरपातानंतरंयोभावः सप्रध्वंसाभावः ध्वं
सस्यापिस्वाधिकरणकपालनाशेनाशएव· नचैवंघटोन्मज्जनापत्तिः घटध्वंसध्वंसस्यापिघटप्रतियोगिकध्वंसत्वात् अन्य
थाप्रागभावध्वंसात्मकघटस्यविनाशेप्रागभावोन्मज्जनापत्तिः॥नाशकाभावमाशंक्याह· स्वेति· ननुप्रागभावध्वंसानाधारकालस्यप्रतियो
गिकालत्वानियमात् घटोन्मज्जनप्रसंगइत्याशंक्यपरिहरति· नचेति· तत्रहेतुमाह· घटध्वंसेति· घटध्वंसकालस्यघटकालत्वाभाववत्तत्प्रतियोगिकध्वंस
कालस्यापितथात्वादित्यर्थः ननुध्वंसजनकत्वस्यतत्प्रतियोगित्वनियमात्कथमजनकस्यघटस्यतत्प्रतियोगित्वमित्याशंक्य· घटध्वंसध्वंसेपि नष्टोघ
टइतिप्रतीतिसद्भावात् घटध्वंसध्वंसस्यापिघटजन्यत्वोपचारात्तत्प्रतियोगिकत्वमास्थेयमन्यथातिप्रसंगइत्याहान्यथेति उक्तानंगीकारेणघटोन्मज्जनापत्तौ

ननु सर्वस्यापि ध्वंसस्यानित्यत्वमुत यस्य कस्यचित् नाद्यः नित्याधिकरणस्य नाशासिद्धात् इति ध्वंसस्य नित्यत्वासिद्धेः न द्वितीयः नित्याधिकरणकध्वंससामान्यात् सर्वस्यापि नित्यात्वाश्रयणौचित्यादित्याशंक्य परिहरति· न चेति· तन्नित्याधिकरणमाकाशादि किंवा चैतन्यमिति विकल्प्याद्यं प्रत्याह· तादृशेति· द्वितीये यि किमानारोपितं वस्तु प्रतियोगि किंवारोपितं तत्राद्यः नेह नानास्ति किंचनेत्यादिश्रुत्या प्रतीयमाननिषेधाभिधानेन सर्वस्यानारोपितत्वाभावाभिधानात्· द्वितीयस्ता दृशध्वंसस्याधिकरणमात्रत्वान्न तवेष्टसिद्धिरित्याशयेनाह· यदीति· असिद्धिः ध्वंसस्य चैतन्यातिरेकेण नित्यत्वासिद्धिः तत्र सुरेश्वराचार्यसंमतिमाह॥

न चैवमपि यत्र ध्वंसाधिकरणं नित्यं तत्र कथं ध्वंसनाश इति वाच्यम्· तादृशाधिकरणं यदि चैतन्यव्यतिरिक्तं तदा तस्य नित्यत्वमसि॥ द्धं ब्रह्मव्यतिरिक्तस्य सर्वस्य ब्रह्मज्ञाननिवर्त्यतायावक्ष्यमाणत्वात्· यदि च ध्वंसाधिकरणं चैतन्यं तदासिद्धः आरोपितप्रति॥ योगिकध्वंसस्याधिष्ठानप्रतीयमानस्याधिष्ठानमात्रत्वात्· तदुक्तं अधिष्ठानावशेषो हि नाशः कल्पितवस्तुन इति· एवं शुक्ति रूप्यविनाशोपीदमवच्छिन्नचैतन्यमेव यत्राधिकरणे यस्य कालत्रयेप्यभावः सोत्यंताभावः यथा वायौ रूपात्यंताभावः सोपि घटादिवत् ध्वंसप्रतियोग्येव· इदमिदं नेति प्रतीतिविषयोऽन्योन्याभावः अयमेव विभागो भेदः पृथक्त्वं चेति व्यवह्रियते· भेदातिरि क्तविभागादौ प्रमाणाभावात्· अयं चान्योन्याभावोधिकरणस्य सादित्वे सादिः यथा घटे पटभेदः अधिकरणस्यानादित्वेनादिरेव य॥ था जीवे ब्रह्मभेदः ब्रह्मणि वा जीवभेदः द्विविधोपि भेदो ध्वंसप्रतियोग्येव· अविद्याया निवृत्तौ तत्परतंत्राणां निवृत्त्यवश्यंभावात्·

तदुक्तमिति उक्तन्यायं शुक्तिरूप्यनाशेति· दिशति· एवमिति· तथा चाधिष्ठानचैतन्यातिरिक्तध्वंसाभ्युपगमे प्रमाणाभावाद्गौरवाच्च तदसिद्धा सुतरां तन्नित्यत्वा सिद्धिरिति भावः तृतीयं लक्षयति· यत्रेति· असंदिग्धमुदाहरणमाह· यथेति· तार्किकमतनिरासायाह· सोपीति· अत्रेदं नेति प्रत्ययविषय इत्यर्थः चतुर्थं लक्ष यति·॥ इदमिति· तादात्म्यसंसर्गावच्छिन्नप्रतियोगिताक इत्यर्थः॥ विभागपृथक्त्वयोः पदार्थांतरत्वनिरासायाह अयमिति· एतस्य सादित्वमनादित्वं च व्यवस्थयाह· अयं चेति· ब्रह्मवन्निवृत्त्यभावमाशंक्याह· द्विविधोपीति· अनादित्वेप्याविद्यकत्वादित्याह· अविद्येति॥ ॥ ॥ ॥ ॥ ॥

प्रकारांतरेणान्योन्याभावं विभजते· पुनरिति· उपाधिसत्ताया व्याप्यासत्ता यस्य भेदस्य तस्य तस्य भावस्तत्त्वं यत्र यात्राकाशादिभेदस्तातत्र घटाद्युपाधिसत्तेति· भेदोपा
धिसत्तयोर्व्याप्यव्यापकभावः ननु ब्रह्मणो जडत्वव्यावृत्तये तत्र प्रपंचप्रतियोगिको भेदोऽभ्युपेयस्तथात्वे चाद्वैतविरोध इत्याशंक्याह· न चेति· यथा वियदादिकमतात्त्विका
त्वान्नाद्वैतविघातकं तद्वद्भेदोपीत्याह· तात्त्विकेति· ननु वियदादिप्रपंचस्यैवतात्त्विकत्वेन तथात्वं कथमित्यत आह· प्रपंचस्येति· प्रपंचस्य ब्रह्मणि कल्पितत्वांगीकारे
वार्तिककारसम्मतिमाह· तदुक्तमिति· नन्वभावस्य चातुर्विध्यवर्णनं सिद्धांतानुसेधि न सिद्धान्ते रद्वैतदीपिकायां तस्य निराकृतत्वादित्याशंक्य प्राचीनैर्व्य

पुनरपि भेदो द्विविधः सोपाधिको निरुपाधिकश्चेति· तत्रोपाधिसत्ताव्याप्यसत्ताकत्वं सोपाधिकत्वं तच्छून्यत्वं निरुपाधिकत्वं तत्रा
द्यो यथा एकस्यैवाकाशस्य घटाद्युपाधिभेदेन भेदः यथा वा एकस्य सूर्यस्य जलभाजनभेदेन भेदः तथा च एकस्यैव ब्रह्मणोऽन्तःकर
णभेदाद्भेदः निरुपाधिकभेदो यथा घटे पटभेदः न च ब्रह्मण्यपि प्रपंचभेदाभ्युपगमेऽद्वैतविरोधः तात्त्विकभेदादेरनभ्युपगमेन विय
दादिवदद्वैताव्याघातकत्वात्· प्रपंचस्याद्वैते ब्रह्मणि कल्पितत्वाङ्गीकारात्· तदुक्तं सुरेश्वराचार्यैः अस्य माभवतः केयं साधकत्वप्र
42 कल्पने किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितमिति· अत एव विवरणे विद्यानुमाने प्रागभावव्यतिरिक्तविशेषणं तत्त्वप्रदीपिका।
यामविद्यालक्षणे भावत्वविशेषणं च संगच्छते· एवं चतुर्विधाभावानां योग्यानुपलब्ध्या प्रतीतिः तत्रानुपलब्धिमानान्तरम् ०॥ ॥

वहृतत्वात्तत्प्रतिपादनं न सर्वथासिद्धांतविरुद्ध मित्याशयेनाह· अत एवेति· यतोऽभावस्य चातुर्विध्यमत एवेत्यर्थः ॥तथा चानुमानम् विवादगोचरापन्नप्रमा
णज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वंतरपूर्वकं भवितुमर्हति· अप्रकाशितार्थप्रकाशकत्वात् अंधकारे प्रथमोत्पन्न
प्रदीपप्रभावदिति वस्तुपूर्वकमित्युक्ता चात्मवस्तुपूर्वकतया र्थांतरत्वं तदर्थं वस्त्वंतरेति· चक्षुरादिव्यावृत्त्यर्थं स्वदेशगतेति· अदृष्टादिकव्यावर्तनाय
॥ ॥ ॥ ॥ ॥ ॥ स्वनिवर्त्येति । इतरज्ञाननिवर्त्यपूर्वज्ञानव्यावृत्त्यर्थं स्वविषयावरणेति प्रागभावव्यावृत्त्यर्थं स्वप्रागभावेति· ॥ ॥ ॥ ॥ ॥

तत्वप्रदीपिकायां चित्सुखाचार्यकृतायां अविद्यालक्षणे अनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वमविद्यात्वमित्येवंरूपे उपसंहरति· एवमिति· ननु किमनुपल
ब्धेरभावप्रमायां करणांतरानुपपत्त्या मानांतरत्वमास्थीयते· अनुभवबलाद्वा नाद्यः क्लृप्तप्रमाणभावस्येंद्रियस्यैव तत्करणत्वसंभवान्न चेंद्रियाभावयोः संबंधानि
रूपणम् संयुक्तविशेषणतासंबंधस्यैव सत्वात् न चात्र प्रमाणाभावः भूतले घटाभाव इत्याधाराधेयभावसंबाधप्रतीतेः घटाभावज्ञानं संबंधविषयकं विशि
ष्टज्ञानत्वाद्दंडीपुरुष इतिज्ञानवदित्यनुमानाच्च· अन्यथाभावस्य निरधिकरणत्वापत्तौ ध्वंसस्य स्वाधिकरणकपालनाशेनेत्यादिवर्णनम् अधिकरणस्य
सादित्व इत्यादिनाभेदस्य द्वैविध्यनिरूपणं च विरुध्येत स संबंधः स्वरूपसंबंधोऽन्यो वेत्यन्यदेतत् न च द्वितीयः निर्घटभूतलं पश्यामीति विपरीतानुव्यव
सायादन्यथापर्वतं पश्यामि· वन्हिमनुमिनोमीतिवद्भूतलाभावयोर्विलक्षणानुव्यवसायापत्तिः किंच प्रत्यक्षप्रमायां प्रत्यक्षप्रमाणं करणमित्युत्सर्गः स
च बलवता बाधकेनापोद्यते· प्रकृते च भावज्ञानं प्रत्यक्षमेवेत्युभयसिद्धं· तत्र प्रत्यक्षप्रमाणमिन्द्रियमेव करणं बाधकाभावादिन्द्रियाभावयोः संबंधस्य च
साधितत्वात् तत्कथमनुपलब्धिर्मानांतरमिति चेदुच्यते· न तावदिंद्रियं तत्करणं संबंधानिरूपणात् न च संयोगादिस्तस्यासंभवात् न च संयुक्तविशेषण
तातत्र प्रमाणाभावादुक्तप्रतीतेरनुमानस्य चाधाराधेयभावसंबंधसाधकतया इन्द्रियाभावसंबंधासाधकत्वान्न चोक्तमूलविरोधस्तादृश संबंधाभावकथन
स्याधाराधेयभावसंबंधकथनपरेण ग्रंथेन विरोधाभावात् नाप्यनुव्यवसायविरोधः फलीभूतं ज्ञानं प्रत्यक्षमित्युक्तत्वात् यदपि किंचेत्यादि तदपि न स
न्निकर्षाभावस्य प्रबलतरबाधकस्य सत्वात् किंच किमभावस्य विशेषणतामात्रं सन्निकर्ष इन्द्रियसन्निकृष्टाधिकरणविशेषणता वा किं वा यत्राधि
करणे प्रतियोगिसत्वमनुपलब्धिविरोधि स्यात्तद्विशेषणता नाद्य· इत्यादिव्यवहितभूतलादिवृत्ति घटाद्यभावेऽपि विशेषणतामात्रस्य विद्यमानत्वेन प्र
त्यक्षतापत्तेः न द्वितीयः परमते करणवलयावच्छिन्ननभस एव श्रोत्रेन्द्रियत्वात्तस्यैव स्वग्राह्यशब्दाभावाधिकरणत्वात्तेन स्वस्यासन्निकर्षादधिकरणेन्द्रि
यसन्निकर्षाभावेन शब्दाभावस्याप्रत्यक्षत्वप्रसंगात् तृतीयेऽपि· अनुपलब्धिविरोधित्वमुपलभ्यमानत्वं तस्य किं यदा कदाचिद्भावोपेक्षित उत नियमेन।
आद्ये व्यवहितेऽप्यभावाधिकरणे कदाचिदुपलंभसंभवात्प्रतियोगिनस्तद्व्यवधाने समयेऽप्यभावप्रत्यक्षः स्यात् न द्वितीयः श्रोत्रदेशे भूतलादौ वा शब्द
स्य घटादेर्वा सत्वेऽपि सामग्र्यभावादिनानुपलंभसंभवेन नियमेन तदुपलंभा गात्तत्र तदभावस्याप्रत्यक्षता पत्तेरित्यन्यत्र विस्तरः एवमुक्तानां प्रमाणानां कीदृ

ननु परतस्त्वप्रमाण्यवादिनि तार्किके जाग्रति कथमेवं वक्तुं शक्यमित्यत आह· तथाहीति· इच्छावृत्तिप्रामाण्याऽतिप्रसंगवारणाय ज्ञानत्वमिति भ्रमेतन्निरासाय
तद्वतीति स्मृत्यनुभवसाधारणं संवादिप्रवृत्त्यनुकूलं प्रामाण्यं तद्वति तत्प्रकारकज्ञानत्वमित्यर्थः· नन्वेवंभूते प्रामाण्ये किं स्वतस्त्वं न तावत् स्वोत्पाद्यत्वमात्माश्रयादित्या
त आह· तच्चेति· ज्ञानजनकसामान्यसामग्र्यतिरिक्तकारणप्रयोज्यत्वं परतस्त्वं नैयायिकाद्यभिमतं निषेधति· नत्विति· प्रमामात्रेऽनुगतगुणसत्वप्रमाणाभावादित्याह
प्रमामात्र इति· ननु प्रमामात्र इत्युक्तमयुक्तं प्रत्यक्षप्रमायां गुणस्य सत्वादित्याशंकानिरासायाह· नापीति· उक्तगुणस्यानुगतत्वाभावादित्याह· रूपादीति· व्यतिरेक
व्यभिचारमुक्त्वान्वयव्यभिचारमाह· सत्यपीति· अत एवान्वयव्यतिरेकव्यभिचारादेव आदिपदं योग्यतादिसंग्रहार्थं सत्यपि सल्लिंगपरामर्शे गंधप्रागभावव

एवमुक्तानां प्रमाणानां प्रामाण्यं स्वत एवोत्पद्यते ज्ञायते च तथा हि स्मृत्यनुभवसाधारणं संवादिप्रवृत्त्यनुकूलं तद्वति तत्प्रकारकज्ञान
त्वं प्रामाण्यं तच्च ज्ञानसामान्यसामग्रीप्रयोज्यं न त्वधिकं गुणमपेक्षते· प्रमामात्रेऽनुगतगुणाभावात्· नापि प्रत्यक्षप्रमायां भूयोवयवें
द्रियसन्निकर्षः रूपादिप्रत्यक्षे आत्मप्रत्यक्षे च तदभावात्· सत्यपि तस्मिन्पीतः शंख इति प्रत्ययस्य भ्रमत्वाच्च· अत एव ना
४३ सल्लिंगपरामर्शादिकमप्यनुमित्यादिप्रमायां गुणः असल्लिङ्ग· परामर्शादिस्थले विषिविषयाबाधे नानुमित्यादेः प्रमा
त्वात्· न चैवमप्रमापि प्रमा स्यात्· ज्ञानसामान्यसामग्र्या अविशेषादिति वाच्यम्· दोषाभावस्यापि हेतुत्वांगीकारात्· न चैवं
परतस्त्वमिति· आगन्तुकभावकारणापेक्षाया एव परतस्त्वात्॥०॥ छेदेन गंधानुमितेरप्रमात्वादन्वयव्यभिचारं मनसि निधाय व्यतिरेकव्य

भिचारं दर्शयति· असल्लिंगेति· ननु भ्रमस्यापि तादृशसामग्रीप्रयोज्यत्वाविशेषाद्भ्रमप्रमाव्यवस्थापकं किमित्याशंक्य निरासायाह· न चेति· प्रतिबंध
काभावस्य कार्यमात्रं प्रति हेतुत्वेन क्लृप्तत्वाद्दोषाभावस्यापि तथात्वेनांगीकारात्· न चायं गुणत्वेन हेतुः भा॥ प्रमाणाभावादित्यर्थः· अथ सिद्धान्ताप
तिमाशंक्य निरासायाह· न चेति· अदृष्टादिसापेक्षत्वादागन्तुकेति· दोषाभावसापेक्षत्वादाह भावेति· तथा चागन्तुकभावकारणानपेक्षज्ञानसामान्य
सामग्रीप्रयोज्यत्वं स्वतस्त्वमित्यंगीकारेण तादृशकारणसहकृतज्ञानसामान्यप्रयोजकप्रयोज्यत्वरूपपरतस्त्वापातो नास्तीति भावः॥०॥ ॥

वे॰ प॰ एवं प्रामाण्योत्पत्तौ स्वतस्त्वमभिधाय तस्य ज्ञप्तौ तदावेदयति· ज्ञायते चेति· तद्वति तत्प्रकारकज्ञानत्वलक्षणप्रामाण्यमुत्पन्नं सज्ज्ञायते च स्वत इत्यर्थः· ज्ञायत इत्य शा १
टी॰ दी॰ स्य गृह्यत इत्यर्थमभिप्रेत्याह· स्वतो ग्राह्यत्वं चेति· परतस्त्ववादिनाऽनुमानादिकं तद्ग्राहकमंगीकृतमतस्तद्वारणाय यावदिति स्वाश्रयग्राहकविशेषणं यावे॥
४३ त्स्वाश्रयग्राहकसामग्रीजन्यग्रहणगोचरत्वं तैर्नांगीक्रियत इत्यर्थः· दोषवशादप्रामाण्यनिश्चये संशये च सत्यव्याप्तिवारणाय दोषाभावे सतीति· तथा च दोषव
शात्तादृशसामग्र्या तदग्रहेऽपि न दोष इति भावः· स्वाश्रयेत्याद्युपपादयति· स्वाश्रय इति· तेनापि न त्वनुमानेनैव सत्यंतपदकृत्यमाशंक्य दर्शयति· न चेति· सत्यं तम

ज्ञायते च प्रामाण्यं स्वतः· स्वतो ग्राह्यत्वं च दोषाभावे सति यावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वं स्वाश्रयो वृत्तिज्ञानं तद्ग्राहकं साक्षिज्ञानं।
तेनापि वृत्तिज्ञाने गृह्यमाणे तद्गतं प्रामाण्यं गृह्यते· न चैवं प्रामाण्यसंशयानुपपत्तिः तत्र संशयानुरोधेन दोषस्यापि सत्त्वेन दोषाभाव-
घटितस्वाश्रयग्राहकाभावेन तत्र प्रामाण्यस्यैवाग्रहात्· यद्वा यावत्स्वाश्रयग्राह्यत्वयोग्यत्वं स्वतस्त्वं संशयस्थले प्रामाण्य
स्योक्तयोग्यतासत्त्वेऽपि दोषवशेनाग्रहात् न संशयानुपपत्तिः· अप्रामाण्यं तु न ज्ञानसामान्यसामग्रीप्रयोज्यं प्रमायामप्यप्रा
माण्यापत्तेः किन्तु दोषप्रयोज्यम्· नाप्यप्रामाण्यं यावत्स्वाश्रयग्राहकग्राह्यं· अप्रामाण्यघटकतदभाववत्त्वादेर्वृत्तिज्ञानाऽ
नुपनीतत्वेन साक्षिणा ग्रहीतुमशक्यत्वात्· किंतु विसंवादिप्रवृत्त्यादिलिंगिकानुमित्यादिविषय इति· परत एवाप्रामाण्यमु
त्पद्यते ज्ञायते चेति॥ इत्यनुपलब्धिपरिच्छेदः॥ सम्प्रदायापि दोषं परिहरति·॥ यद्वेति॥ एवमुत्पत्तिज्ञप्त्योः प्रामाण्यस्य स्वतस्त्वमुपपाद्य तदप्रा

माण्यस्य परतस्त्वं वर्णयति· अप्रामाण्यमिति· विसंवादीति· इयं शुक्तिरजतार्थिवृत्तिः प्रामाण्यशून्या विसंवादिप्रवृत्तिजनकत्वादि विसंवादिप्रवृ॥
त्त्यादिलिंगिकानुमितिग्राह्यम्· आदिपदेनाप्तवचनजन्यत्वादिसंग्रहः द्वितीयादिपदं शाब्दज्ञानादिसंग्रहार्थम्॥०॥ इति श्रीमत्परमहंसप०॥:॥
रिव्राजकाचार्यश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिविरचितायां वेदांतपरिभाषार्थदीपिकायामनुपलब्धिपरिच्छेदः

समाप्तः सम्पूर्णम्

वृति २ ॥ अथ प्रमेयं निरूपयितुमुपक्रमते ॥ एवमिति · प्रामाण्यं यथाभूतार्थज्ञानजनकत्वं तत्त्वं यथार्थत्वं · तथा च · तदेवात्र प्रतिपाद्यं तन्नप्रतिपादनं यदार्थप्रतिपद
नधीनमतः पदार्थो निरूप्यत इत्याह · तच्चैक्यमिति · इतिहेतौः प्रथमोपात्तत्वात्प्रत्यक्षाद्युपगोचरत्वाद्भ्यर्हितत्वाच्चादौ तत्पदार्थो निरूप्यत इत्यर्थः ॥ तत्र लक्ष्म
णप्रमाणयोरसाधारणधर्मो लक्षणं स्वरूपसद्व्यावर्तकमिति · मुख्यत्वात्स्वरूपलक्षणं लक्षयति · तत्रेति · तत्पदार्थलक्षणस्य प्रकृतत्वाल्लौकिकम् प्रकृष्टप्रका

एवं निरूपितानां प्रमाणानां प्रामाण्यं द्विविधं व्यावहारिकतत्त्वावेदकत्वं पारमार्थिकतत्त्वावेदकत्वं चेति · तत्र ब्रह्मस्वरूपावगा ॥
हिप्रमाणव्यतिरिक्तानां सर्वप्रमाणानां व्यावहारिकप्रामाण्यं तद्विषयाणां व्यवहारदशायां बाधाभावात् · द्वितीयं तु जीवब्रह्मैक्यपराणां स
देव सोम्येदमग्र आसीदित्यादिनां तत्त्वमसीत्यन्तानां तद्विषयस्य जीवपरैक्यस्य कालत्रयाबाध्यत्वात् · तच्चैक्यं तत्त्वंपदार्थज्ञा ॥
नाधीनज्ञानमिति · प्रथमं तत्पदार्थो लक्षणप्रमाणाभ्यां निरूप्यते · तत्र लक्षणं द्विविधम् · स्वरूपलक्षणं तटस्थलक्षणं चेति · ॥
44 तत्र स्वरूपमेव लक्षणं स्वरूपलक्षणं · यथा · सत्यं ज्ञानमनन्तं ब्रह्मेति · अत्र सत्यादिकं स्वरूपलक्षणम् · ननु स्वस्य स्ववृत्तित्वा
भावे कथं लक्षणत्वमिति · चेन्न · स्वस्यैव स्वापेक्षया धर्मिधर्मभावकल्पनया लक्ष्यलक्षणत्वसम्भवात् · तदुक्तं ॥ ॥ ॥
॥ ॥ ॥ ॥ आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः अपृथक्त्वेपि चैतन्यात्पृथगिवावभासन्त इति ॥ ॥

शब्दं द्रष्टव्यानुदाहृत्य वैदिकमेतदुदाहरति · यथेति · आदिपदेन ज्ञानानन्तं संग्रहः · सच्चिदनन्तात्मक मेकमेव लक्षणमिति केचित् · सत्यादिकं प्रत्येकं लक्ष्म
णमित्यन्ये · ननु असाधारणधर्मस्य लक्षणत्वात्स्वस्य च स्ववृत्तिधर्मत्वाभावात्कथं सत्यादिकं स्वरूपं लक्षणमिति शङ्कते ॥ नन्विति ॥ धर्मं पारमार्थिकत्व
विवक्षणे गौरवान्नैवमित्याह · नेति · स्वोक्ते पद्मपादाचार्यसंमतिमाह · तदुक्तमिति · द्वितीयं लक्षयति · ॥ ॥ श्रीजानकीवल्लभो विजयते ॥ ॥ ॥

वे॰प॰ तटस्थेति॰ स्वरूपलक्षणेऽतिप्रसंगनिरासाय सत्यन्तम्॰ लक्ष्यावृत्तितादृशधर्मेतिव्याप्तिनिराकरणाय व्यावर्तकमिति स्पष्टप्रतिपत्त्यर्थं लौकिकमप्युदाहरति। य
टी॰टी॰ थेति॰ परमतेनाह॰ महाप्रलयइति॰ उभयमतेनाह॰ उत्पत्तिकालइति॰ प्रकृतब्रह्मणस्तत्किमित्यत आह॰ प्रकृतइति॰ मायादेरपि जगदंतःपातित्वादाह॰।ः
५४ कार्येति कुलालादावतिव्याप्तिवारणाय जातमिति कार्यमात्रमित्यर्थः कारणत्वमपि प्रधानादिसाधारणमित्यत आह॰ कारणत्वे चेति एवमपि कथं निरास इ
त्याह॰ कर्तृत्वं चेति॰ अत्र प्रमाणाकांक्षायामाह॰ ईश्वरस्येति सर्वज्ञः समान्यतः सर्वविद्विशेषतः ब्रह्मकार्यं ब्रह्मा हिरण्यगर्भः नाम घट इत्यादिरूपं शुक्ला
दिरन्नं व्रीहियवादयः कालकालो गुणी सर्वविद्य इत्यादिश्रुति॰ रादिपदार्थः यस्मादाकाशादिः स आत्मा कामितवान् इच्छां कृतवान् बहुधा भवेयं कथ

तटस्थलक्षणं यावल्लक्ष्यकालमनवस्थितत्वे सति यद्व्यावर्तकं तदेव यथा गन्धवत्त्वं पृथिवीलक्षणं॰ महाप्रलये परमाणुषु उत्पत्ति।
काले घटादिषु गंधाभावात्॰ ब्रह्मणि प्रकृते च जगज्जन्मादिकारणत्वं अत्र जगत्पदेन कार्यजातं विवक्षितं कारणत्वं च कर्तृत्वमतो वि
द्यादेर्नातिव्याप्तिः कर्तृत्वं च॰ तत्तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं ईश्वरस्य तावदुपादानगोचरापरोक्षज्ञानसद्भावे च यः स
र्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते इत्यादिश्रुतिर्मानं तादृशचिकीर्षासद्भावे सोऽकामयत बहु स्यां
प्रजायेय इत्यादिश्रुतिर्मानं तादृशकृतौ च तन्मनोऽकुरुत इत्यादिवाक्यं तानेच्छाकृतीनां मध्येऽन्यतमगर्भं लक्षणत्रितयमिदं वि
वक्षितम्॰ अन्यथा व्यर्थविशेषणत्वापत्तेः॥ अत एव जन्मस्थितिध्वंसानामन्यतमस्यैव लक्षणं प्रवेशः एवं च प्रकृते लक्ष॥ः
णानि नव संपद्यंते॰ ब्रह्मणो जगज्जन्मादिकारणत्वे च यतो वा इमानि भूतानि जायंते येन जातानि जीवंति यत्प्रयंत्यभिसंवि
शंतीत्यादिश्रुतिर्मानम्॰॥ नैकस्य बहुधाभवनमित्यत आह॰ प्रजायेयेति॰ उत्पद्येयं तदैक्षतेत्याद्याश्रुतिरादिनोपादेयातं ब्रह्म स प्राणमसृजत इत्याद्या
श्रुतिरादिनोपादेयान्त्रियतयमिति॰ तत्र उपादानगोचरापरोक्षज्ञानवत्त्वे तादृशचिकीर्षावत्त्वं तादृशकृतिमत्त्वमित्येवमित्यर्थः॥ एकमेव लक्षणं कुतो नेत्यत आ
ह॰ अन्यथेति॰ लक्षणत्रितयाविवक्षणे इत्यर्थः यत एकलक्षणे विवक्षणे विशेषणवैयर्थ्यमतो विशेषणवैयर्थ्यादेव जन्माद्यन्यतमस्यैव लक्षणे प्रवेश इत्याह॰। राम
॥ अत एवेति फलितमाह॰ एवं चेति कार्यजातजन्मगोचरापरोक्षज्ञानवत्त्वं तत्स्थितिविषयज्ञानवत्त्वं तल्लयगोचरज्ञानवत्त्वं समस्तकार्यगोचरचि॥ः॥ः। ५४

कीर्षाश्रयत्वंतत्स्थितिविषयकीर्षावत्वंतत्लयगोचरचिकीर्षास्पदत्वंकार्य्यमात्रजन्मगोचर कृतिमत्वंतत्स्थितिविषयककृत्याश्रयत्वंतल्लयगोचरकृत्या
स्पदत्वमित्येवंरूपाणीत्यर्थः ब्रह्मणोजगज्जन्मादिहेतुत्वेपिप्रमाणाकांक्षायामाह· ब्रह्मणइति· प्रयंतिप्रलयंगच्छंतिसंतियत्प्रविशंतिसर्वाणिहवाभूतानि
आकाशादेवसमुत्पद्यंतआकाशंप्रत्यस्तंयंतीत्याद्याश्रुतिरादिनोपादेयानतुत्रिभिरस्योपादानत्वसूचनार्थंकस्यैलक्षणप्रवेशेतन्नसिद्ध्यतीत्यरुच्याह· यद्वेति।
उपादानंचयदभिन्नंकार्य्यमुत्पद्यतेततदभेदश्चपृथक्सत्ताशून्यत्वंतच्चाविद्याब्रह्मणोःसमानंब्रह्मण्यप्यस्त्यस्यपृथक्सत्ताशून्यत्वादित्याशयेनाह· उपादानत्वं
चेति· तथाचकल्पितविकारसंबंधस्यवास्तवनिर्विकारत्वाविरोधादुपादानत्वेपिविकारशून्यत्वंब्रह्मण्यपइतिभावः विपरिणममानमेवोपादानमितियद्याग्रह
स्तर्ह्यस्तूपादानंमायातथापिस्वाधिष्ठानंब्रह्मविनातस्यास्तथात्वाभावात्तदधिष्ठानस्याप्युच्यमानंमुपादानत्वमविरुद्धमिति तथाभूतमायाधिष्ठानत्वमेवल

यद्वानिखिलजगदुपादानत्वंब्रह्मणोलक्षणंउपादानत्वंचजगदध्यासाधिष्ठानत्वम्· जगदाकारेणविपरिणममानमायाधिष्ठा
नत्वंवाएतादृशमेवोपादानत्वमभिप्रेत्येदंसर्वंयदयमात्मा सच्चत्यच्चाभवत्· बहुस्यांप्रजायेयेत्यादिश्रुतिषुब्रह्मप्रपंचयोस्तादा।
त्म्यव्यपदेशः घटःसन् घटोभाति घटइष्टइत्यादिलौकिकव्यपदेशोपिसच्चिदानंदरूपब्रह्मैक्याध्यासात्· नन्वानंदात्मकचिदध्या।
साद्घटादेरिष्टत्वव्यवहारेदुःखस्यापितत्राध्यासात्तत्रापिइष्टत्वव्यवहारापत्तिरितिचेन्न· आरोपेसतिनिमित्तानुसरणंनतुनिमि
त्तमस्तीत्यारोपइत्यभ्युपगमेनदुःखादौसच्चिदंशाध्यासेप्यानंदांशाध्यासाभावात्॥ लक्षणमस्त्वित्याशयेनाह· जगदिति· नचजगतोमाया

परिणामत्वेमानाभावः मायांतुप्रकृतिंविद्यात् मायाख्यरूपेणप्रकृतिःस्तूयतेसचराचरंजगन्मायापरिणामंकार्य्यत्वात्कृतिरूपवदितिप्रमाणसत्वात्· नचवा॥
प्यत्वमुपाधिःसाधनव्यापकत्वात्· यद्वाजगज्जडोपादानकंकार्य्यत्वात्संमतवत्तच्चैकंलाघवात्तदपिश्रुतिस्मृतिप्रामाण्यात्परिशेषादज्ञानंमायाऽविद्याऽज्ञा
नमित्यनर्थांतरंननुश्रुतिषुजगद्ब्रह्मतादात्म्यव्यपदेशाज्जगदाकारेणविपरिणममानत्वमुपादानत्वमित्येवतल्लक्षणंकुतोनांगीक्रियतइत्याशंक्य चेतनस्यजडाका
रेणपरिणामायोगात्· कूटस्थनित्यत्वश्रुतिविरोधाच्चोक्तोपादानत्वाभिप्रायेणैवतादात्म्यव्यपदेशइत्याह· एतादृशमेवेति· यदिदंसर्वंहिरण्यगर्भादिस्तंबपर्यंतंतदय

तादात्म्यव्यपदेशः सन्मूर्तपृथ्व्यादिभूतत्रयस्य दमूर्ते वाय्वाकाशे तद्रूपमभवदित्यर्थः बहु स्यां बहुतादात्म्यवान्भवेयं स स्रष्टुः स्वाप्रपदार्थैस्तादात्म्यवदिति वि- ॥६२॥
वेकः आदिपदेन सर्वं खल्विदं ब्रह्म ऐतदात्म्यमिदं सर्वमित्याद्याः श्रुतय उपादेयाः एवं लौकिकोपि तादात्म्यव्यपदेशोऽध्यासकृत एवेत्याह घटः सन्निति अ-
तिमसंगांशं शंकते नन्विति घटादिष्विष्टत्वव्यवहारदर्शनादानंदाध्यासस्तत्र वर्ण्यते तद्दर्शनान्नतु स्वआनंदाशाध्यास इत्याह नेति आदिपदं दुःखसाधनपरं
सच्चिदंशाध्यासेपि तत्तादात्म्याध्यासेपि एवमग्रेपि एवं प्रपंचे नामरूपव्यवहारः किंकृत इत्यत आह जगतीति स्वोक्तेभियुक्तवाक्यमुदाहरति तदुक्तमिति ए-
वं स्वरूपतटस्थलक्षणाभ्यां तत्पदार्थलक्ष्यः जगदुत्पत्तिनिरूपणं प्रतिजानीते अथेति आकलय्येदमित्थमित्यालिख्य परमेश्वरे वैषम्यनिरासार्थमुक्तं सृज्य-

जगति नामरूपांशद्वयव्यवहारस्तु अविद्यापरिणामात्मकनामरूपसंबंधात् तदुक्तं अस्ति भाति प्रियं रूपं नाम चेत्यंशपंचकं आद्यंत्र-
यं ब्रह्मरूपं जगद्रूपं ततो द्वयमिति अथ जगतो जन्मक्रमो निरूप्यते तत्र सर्वाद्यकाले परमेश्वरः सृज्यमानप्रपंचवैचित्र्यहेतुप्राणिकर्मसह-
कृतोऽपरिमितानिरूपितशक्तिविशेषविशिष्टमायासहितः सन्नामरूपात्मकनिखिलप्रपंचं प्रथमं बुद्ध्वाकलय्येदं करिष्यामीति संक-
ल्पयति तदैक्षत बहु स्यां प्रजायेयेति सोकामयत बहु स्यां प्रजायेयेत्यादिश्रुतेः ततः आकाशादीनि पंचभूतानि अपंचीकृतानि तन्मात्रपद-
प्रतिपाद्यानि उत्पद्यंते तत्राकाशस्य शब्दो गुणः वायोस्तु शब्दस्पर्शौ तेजसस्तु शब्दस्पर्शरूपाणि अपां तु शब्दस्पर्शरूपरसाः पृथिव्यास्तु
शब्दस्पर्शरूपरसगंधाः न च शब्दस्याकाशमात्रगुणत्वं वाय्वादावपि तदुपलंभात् न चासौ भ्रमः बाधकाभावात् इमानि भूता॥
नि त्रिगुणमायाकार्याणि त्रिगुणानि गुणास्सत्वरजस्तमांसि ॥ मानेति नन्वतस्य कूटस्थत्वात्कथं तत्र संकल्पादिकमित्याशंकानिवृत्त्यर्थमु-

क्तमपरिमितेत्यादि प्रमाणमाह तदिति तन्मनोकुरुतेत्यादिश्रुतिगतादिपदादुपादेया तत ईक्षणसंकल्पप्रयत्नानंतरं वियदधिकरणं मनसि निधायाह आकाशादीनीति
तथा च श्रुतिः तस्माद्वा एतस्मादात्मनः आकाशस्संभूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवीति अपंचीकृतानां भूतानामेव पुराणादिषु तन्मात्रपदप्रतिपाद्यतां इ-
त्याशयेनाह तन्मात्रेति पंचीकृतभूतेषु शब्दादिगुणोपलब्धेरपंचीकृतेष्वप्यनुमानेन सिद्धांस्तानाह तत्रेति अपंचीकृताकाशादिभूतेषु नैयायिकमतं निरस्यति न चेति पं-
चीकृतवाय्वादौ तदुपलंभादपंचीकृतवाय्वादावपि तदुपलंभ इति भावः ननु जलादावपि गंधोपलंभात्कथं तस्य पृथिवीमात्रगुणत्वमिति चेन्न तस्य पंचीकृतपृथिव्यंशसं- राम ५५
॥२॥ पंचीकृतभूतनिष्ठाः शब्दादिगुणाः कारणपूर्वकाः कार्यत्वात् घटरूपवत् २॥

एतेषां त्रिगुणात्मकत्वेपि सत्वगुणप्रधानेभ्य एभ्यो यदुत्पद्यते तेदाहैतैश्चेति एतैरपंचीकृतैः मनसः स्थानं गलांतरं बुद्धेर्वदनं अहंकारस्य हृदयं चित्तस्य नाभि
रिति· शारीरकोपनिषदि मन आदिगोलकान्युक्तानि दिक्वातार्कप्रचेताश्वीति भागवतमनुसृत्याह· श्रोत्रादीनामिति यद्यपि सुबालोपनिषदि घ्राणस्य पृथि
वी देवतोक्ता तथापि पृथिव्यभिमानिन्या देवताया अश्व्यात्मना तदधिष्ठातृत्वाद विरोधः रजःप्रधानानामेषां कार्यमाह· एतैरेवेति· तेषु पंचवायुषु प्राणलक्षय
एतैश्च सत्वगुणोपेतैः व्यस्तैः पृथक्पृथक् क्रमेण पंचभूतैः श्रोत्रत्वक्चक्षूरसनघ्राणानि पंचज्ञानेंद्रियाणि जायंते एतेभ्यः पु॥ॐ॥
नराकाशादिगतसात्विकांशेभ्यः मिलितेभ्यः मनोबुद्ध्यहंकारश्चित्तानि जायंते· श्रोत्रादीनां पंचानां क्रमेण दिक्वातार्कवरुणाश्वि
नोधिष्ठातृदेवताः मनआदीनां चतुर्णां क्रमेण चन्द्रचतुर्मुखशंकराच्युतः अधिष्ठातृदेवताः एतैरेवरजोगुणोपेतैः पंचभू
तैर्व्यस्तैर्यथाक्रमं वाक्पाणिपादपायूपस्थाख्यानि कर्मेन्द्रियाणि जायन्ते· तेषां च क्रमेण वह्नीन्द्रोपेन्द्रमृत्युप्रजापतयोऽधिष्ठातृदे
वताः रजोगुणोपेतपंचभूतैरेव मिलितैः पंचवायवः प्राणापानव्यानोदानसमानाख्या जायन्ते· तत्र प्राग्गमनवान् वायुः प्राणः नासा
दिस्थानवर्ती· अर्वाग्गमनवानपानः वाय्वादिस्थानवर्ती विष्वग्गतिमान्व्यानः अखिलशरीरवर्ती ऊर्ध्वगमनवानुत्क्रमणवायुरु
46
दानः कंठस्थानवर्ती· अशितपीतान्नादिसमीकरणः समानः नाभिस्थानवर्ती तैरेव तमोगुणोपेतैरपंचीकृतभूतैः पंचीकृतानि
जायंते· तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति श्रुतेः॥ पंचीकृतोपलक्षणार्थत्वात्॥ ऽऽ तिप्राग्गितिसर्वेषामूर्ध्वगतिमानित्यर्थः तेनोत्क्रांतिस
मय उदानस्योर्ध्वगतिमत्वेपि नातिप्रसंगः वायुः प्राणो भूत्वा नासिके प्राविशदित्यैतरेयश्रुतिमनुसृत्याह· नासादीति· नाभ्यादिनासिकापर्यंतानि स्थानान्यादिपदा
र्थः अपानं लक्षयति·॥ अर्वागिति·॥ अधोगमनवान्· नाभ्यादिपायुपर्यंतस्थानान्यादिशब्दार्थः तथा चैतरेयश्रुतिः॥ मृत्युरपानो भूत्वा नाभिं प्राविशति· व्यानं
लक्षयति· विष्वगिति·। विष्वग्गमनवान्सर्वतोगमनवान् उदानलक्षणमाह· ऊर्ध्वमिति· प्राणेऽतिप्रसंगमाशंक्याह· उत्क्रमणेति। लोकांतरयात्राकाल ऊर्ध्वग

टीपन्-पं·॥१॥मैत्रेयोपनिषच्छ्रुतिमनुसृत्यमूलस्थोदानलक्षणवाक्यंलक्षणान्तरपरत्वेनबोधयतीयहेति॥१॥उत्क्रमणार्थे॥२॥

वे·प· अथैकयोर्ध्वउदानःपुण्येनपुण्यंलोकंनयतीत्यादि प्रश्नोपनिषद्वाक्यमत्रप्रमाणंयैर्ह्यायत्पीताशितपानीयान्नाद्युद्गारक्रियोत्क्रमणंतद्धेतुत्वेद
टी·दी· र्थमूर्ध्वगमनवानित्यर्थः।समानेलक्षयति·अशितेति·अस्यसकलशरीरवर्तित्वेपिमुख्यस्थानमाह·नाभिति·प्राणादीनांलक्षणान्युक्तानिमैत्रेयोप
४६ निषदि·अथयोयमूर्ध्वमुत्क्रामतिएषवावसप्राणःयोयमवांचंसंक्रामतियेनैताःशिराअनुव्याप्ताःयोयंपीतमशितमुद्गिरतियोयंस्थविष्टमन्नधातुमपाने
स्थापयति·अणिष्ठंचांगं·समानयतीति·तमोगुणप्रधानानामेषांकार्यमाह·तैरेवेति·ननुत्रिवृत्करणस्यश्रुतिमूलकत्वात्त्रिवृत्कृतभूतानीतिवक्तव्येपं
चीकृतभूतानीतिश्रुतिविरुद्धमित्यतआह·तासामिति·तेजोबन्नरूपाणांमध्येएकंतेजोभूतंद्विधाविभज्यतयोरेकंपुनर्द्विधाविभज्यतयोरंशयोरब
न्नयोःसंयोजनंतथाजलंद्विधाविभज्यतयोरेकंभागंपुनर्द्विधाविभज्यतयोरंशयोस्तेजःपृथिव्योःसंयोजनमेवंपृथिवींद्विधाविभज्यतयोरेकंभागंपुन
र्द्विधाविभज्यतयोरंशयोर्जलतेजसोःसंयोजनमित्येवंत्रिवृतंकरवाणीति·यद्यपिच्छांदोग्येत्रिवृत्करणमुक्तम्·तथापि·तद्वाक्यस्योक्तभूतपंचोत्पत्त्य राम
नुसारित्वात्तस्याश्चपंचभूतोत्पत्तिपरत्वेनसूत्रकारैःसिद्धांतितत्वात्त्रिवृत्करणस्यापिपंचीकरणोपलक्षणार्थत्वंन्याय्यमितिभावः॥ ॥ ॥ ॥ ४६

ननु पंचानामपि पंचात्मकत्वे पृथिवीयमिदं जलमित्यादिव्यपदेशः कुत इत्याशंक्याह· पृथिव्यादिष्विति· अत्र द्वितीयाध्यायांतर्गतं भगवतो व्यासस्य सूत्रं प्रमाण
मित्याह· तदुक्तमिति· तुशब्दः शंकानिरासार्थः विशेषस्य भावो वैशेष्यं तस्मात्तत्स्वभागस्य भूयस्त्वात्तद्वादः पृथिवीयमिदं जलमित्यादिव्यपदेशस्तद्वादः पुन
र्भ्यासोऽध्यायसमाप्तिसूचनार्थः एतेन पंचीकरणं संप्रदायाध्वसिद्धमपि नादरणीयं तन्मूलभूतश्रुतिसूत्रयोरभावादन्यथा गगनपवनयोश्चाक्षुषत्वापत्तेरिति
मत्युक्तम्॰ श्रुतिसूत्रयोरुपलक्षणार्थत्वादन्यथा पुराणवाक्यानां निरालंबनापातात् पंचीकृतेतरभूतगुणानामितरस्मिन्पंचीकृतेऽप्यनुपलब्धेस्तथा च पथा
॥ पंचीकरणप्रकारश्चेत्थं· आकाशमादौ द्विधा विभज्य तयोरेकं भागं पुनश्चतुर्धा विभज्य तेषां चतुर्णामंशानां वाय्वादिषु चतुर्षु
। भूतेषु संयोजनं एवं वायुं द्विधा विभज्य तयोरेकं भागं चतुर्धा विभज्य तेषां चतुर्णामंशानामाकाशादिषु संयोजनं एवं तेजआदीनामपि
तदेवमेकैकभूतस्यार्द्धं स्वांशात्मकमर्द्धमितरचतुर्विधभूतमयमिति· पृथिव्यादिषु स्वांशाधिक्यात्पृथिव्यादिव्यवहारः तदुक्तं वैशे
ष्यात्तु तद्वादस्तद्वाद इति पूर्वोक्तैरपंचीकृतैर्लिङ्गं शरीरं परलोकयात्रानिर्वाहकं मोक्षपर्यंतं स्थायि मनोबुद्धिभ्यामुपेतं ज्ञानेन्द्रि
47 यपंचकं कर्मेन्द्रियपंचकं प्राणादिपंचकं संयुक्तं जायते· तदुक्तम्· पंचप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्· अपंचीकृतभू
तोत्थं सूक्ष्मांगं भोगसाधनमिति· तच्च द्विविधं परमपरं च तत्र परं हिरण्यगर्भलिंगशरीरं अपरमस्मदादिलिंगशरीरं तत्र हिर
ण्यगर्भलिंगशरीरं महत्तत्वम्॰ अस्मदादिलिंगशरीरमहंकार इत्याख्यायते॰ पंचीकृततेजआदावपंचीकृतस्वगुणानामेवभानं नन्व
पंचीकृतस्वेतरगुणानां तथाकाशवाय्वोरपीति· सर्वथा संप्रदायसिद्धं पंचीकरणमादरणीयमिति भावः। तेषामेव गुणत्रयोपेतानां मनआदिसमुदायात्मं
कं लिंगशरीरं कार्य्यमित्याह॰ पूर्वोक्तैरिति· ननूपलभ्यमानस्थूलशरीरेणैव समस्तकार्य्यनिर्वाहात्किमर्थकमेतदित्यत आह परलोकेति॥ तस्य मोक्षेऽप्य
भावाभावमाशंक्याह· मोक्षेति· आत्यंतिकप्रलयपर्यन्तस्थायीत्यर्थः॥ तेषां समुदायः शरीरमित्यादिमैत्रेयश्रुतिमूलकमभियुक्तवाक्यमत्र प्रमाण
॥ॐ॥ॐ॥ मित्याह· तदुक्तमिति॰ सूक्ष्मांगं सूक्ष्मशरीरं तत्र ब्रह्माण्डव्यापित्वादाद्यं परं देहमात्रव्यापित्वाद्द्वितीयमपरमित्याशयेनाह॰ तत्रेति॰ ॥ॐ॥ॐ॥

सुवालश्रुतौ संन्यासविधाय्यारण्यकश्रुतौ च चतुर्दशभुवनात्मकब्रह्मांडोत्पत्तिरभिहितातदनुसृत्याह·एवमिति·शरीरजैः कर्मदोषैर्यातिस्थावरतांनरइत्यादि
वचनमनुसृत्याह·वृक्षादीनामिति·ननु शरीरस्य परमात्मानःशरीसाध्यब्राह्मणादिकार्यप्रति कथं हेतुत्वमित्याशंक्य तत्र परंपरयेतिदर्शयति·तत्रेति·कार्यकर्द
वेलिंगशरीरस्य हि द्विविधस्य यो वै ब्रह्माणं विदधाति पूर्वमित्यादिश्रुति हिरण्यगर्भस्य साक्षात्स्थूलकार्य्यप्रमाणं आदिपदं मरीच्यादिसंग्राहकं हिरण्यगर्भादिद्वारापरेश
स्य कर्तृत्वे श्रुतिं·प्रमाणयति·हंतेति·देवताः तेजोवन्नरूपाः ननु हिरण्यगर्भस्य परेशमूर्तित्रयांतर्गतत्वेन कथं जीवत्वमित्याशंक्याह·हिरण्यगर्भ इति·अत्र

एवं तमोगुणयुक्तेभ्यः पंचीकृतभूतेभ्यो भूर्भुवःस्वर्महर्जनस्तपः सत्यात्मकस्योर्ध्वलोकसप्तकस्य अतलवितलसुतलातलातल
रसातलमहातलपाताला ख्याधोलोकसप्तकस्य ब्रह्मांडस्य जरायुजांडजस्वेदजोद्भिज्जाख्यचतुर्विधस्थूलशरीराणामुत्पत्तिः तत्र जरायु
जानि जरायुभ्यो जातानि मनुष्यपश्वादिशरीराणि अंडजानि अंडेभ्यो जातानि पक्षिपन्नगादिशरीराणि स्वेदजानि स्वेदाज्जातानि यू
कामशकादीनि उद्भिज्जानि भूमिमुद्भिद्य जातानि वृक्षादीनि·वृक्षादीनामपि पापफलभोगायतनत्वेन शरीरत्वम् तत्र परमेश्वरस्य पं
च तन्मात्राद्युत्पत्तौ सप्तदशावयवोपेतलिंगशरीरोत्पत्तौ च·हिरण्यगर्भस्थूलशरीरोत्पत्तौ साक्षात्कर्तृत्वं इतरनिखिलप्रपंचोत्पत्तौ हिर
ण्यगर्भादिद्वाराहंताहमिमास्तिस्रो देवताः अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति श्रुतेः हिरण्यगर्भो नाम मूर्तित्रयाद
न्यः प्रथमो जीवः स वै शरीरी प्रथमः स वै पुरुष उच्यते·आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत इति हिरण्यगर्भः समवर्तताग्रे भूतस्य इत्या
दिश्रुतेः।एवं भूतभौतिकसृष्टिर्निरूपिता इदानीं प्रलयो निरूप्यते॰प्रलयो नाम त्रैलोक्यनाशः स च चतुर्विधः नित्यः प्राकृतो नैमित्तिक ॥४०॥
आत्यन्तिकश्चेति·तत्र नित्यप्रलयः सुषुप्तिः तस्याः सकलकार्यप्रलयरूपत्वात्·धर्माधर्मपूर्वसंस्काराणां च तदाकारणात्मनावस्था

प्रमाणमाह·स इति·शरीरीति·श्रुत्या तस्य जीवत्वावधारणात् मूर्तित्रयान्यत्वे श्रुतिः प्रमाणमिति भावः॥ब्रह्मा देवानां प्रथमः संबभूवेत्याद्याश्रुतिरादिपदग्राह्यास्
ष्टिप्रतिपादनोपसंहारःपूर्वकं प्रलयनिरूपणं प्रतिजानीते·एवमिति·भूलोकेऽधोलोकेऽधोलोकानामंतर्भावः स्वर्लोके तदुपरिष्ठानामिति त्रिलोकीपक्षे स प्रलयः
नित्यादिभेदेन त्रिविधः चतुर्दशलोकीपक्षे स नैमित्तिक इत्येवं तस्य चातुर्विध्यमभिप्रेत्याह॰स चेति·प्रलयो नाम विनाश इति पाठः स्पष्टः तत्राद्यं लक्षयति·त

सुषुप्तिकाले सकले विलीन इति कैवल्यश्रुतिमनुसृत्याह तस्यादिति नन्वेवं तर्हि सुखादिहेतोः धर्मादेः स्मृतिहेतोः संस्कारस्य च तदानीं प्रविलयादुत्थितस्य कथं सुखादि भेद भोगः पूर्वपदार्थस्मरणं चेत्याशंक्याह धर्माधर्मेति कारणात्मना विद्यात्मना स्वकार्यकारणात्मना वा नन्वेवं तः करणस्यापि तदानीं कारणात्मनावस्थानात् कथं तदधीनप्राणनादि क्रियेत्याशंक्य देहेतु धर्मादेर्विनाशेपि देह स्थितिवत् क्रियोपलब्धिरपि नानुपपन्नेत्याह नचेति ननु कारणाभावेद्वयमपि विरुद्धमित्यपरि तोषादाह वस्तुत इति सुप्तस्य मृतादविशेषमाशंक्य परिहरति नचेति जाग्रदवस्थायाम्परेतिस्य लिंगशरीरं जन्मांतरीं तत्तत्पदार्थसंस्कारजन्य तत्तत्पदार्थाकारा त्मना लोकांतरे स्थितं सुप्तस्य तु तादृश संस्कारात्मनैवेत्यर्थः न तु पुरूषांतरस्य देहः प्राणक्रिया च भ्रममात्रप्रतीय तेन कर्मेन्द्रियव्यापारादिकमिति वैषम्ये नियामकाभावः ९४

तेन सुषुप्तोत्थितस्य न स्वदुःखाद्यनुभवानुपपत्तिः न वा स्मरणानुपपत्तिः न च सुषुप्तावन्तःकरणस्य विनाशे तदधीनप्राणादिक्रिया नुपपत्तिः वस्तुतः श्वासाद्यभावेपि तदुपलब्धेः पुरुषांतरविभ्रममात्रत्वात् सुप्तशरीरोपलंभवत् न चैवं सुप्तस्य परेताद् विशेषः सुप्त स्य हि लिंगशरीरं संस्कारात्मनात्रैव वर्तते परेतस्य तु लोकांतरे इति वैलक्षण्यात् यद्वान्तःकरणस्य द्वे शक्ती ज्ञानशक्तिः क्रियाशक्तिश्चे ति तत्र ज्ञानशक्तिविशिष्टान्तःकरणस्य सुषुप्तौ विनाशः न क्रियाशक्तिविशिष्टस्येति प्राणाद्यवस्थानमविरुद्धं यदा सुप्तः स्वप्नं न कंचन
48 पश्यति अथास्मिन्प्राण एवैकधा भवति अथैनं वाक् सर्वैर्नामभिः सहाप्येति। सता सोम्य तदा संपन्नो भवति स्वमपीतो भवतीत्या दिश्रुतिरुक्त सुषुप्तौ मानम् प्राकृत प्रलयस्तु कार्यब्रह्मविनाशनिमित्तकः सकलकार्यनाशः यदा तु प्रागेवोत्पन्नब्रह्मसाक्षात्कारस्य कार्यब्रह्मणो ब्रह्माण्डाधिकारलक्षणप्रारब्धकर्मसमाप्तौ विदेहकैवल्यात्मिका परा मुक्तिः तदा तल्लोकवासिनामप्युत्पन्नब्रह्म साक्षात्काराणां ब्रह्मणा सह विदेहकैवल्यं ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसंचरे परस्यांते कृतात्मानः प्रविशन्ति परं पदमिति श्रुतेः॥

पद्मपादादिसंग्राहकं देहावस्थानं तु मृतशरीरावस्थानवदविरुद्धमिति भावः। अत्र प्रमाणमाह। यदेति अथ तदानीमस्मिन्सुप्ते सति ए(()) मालस्याह यद्वेति आदि कथा एकः एनं प्राणं अप्येति प्रविशतीति कौषीतकिश्रुतिमुदाहृत्य छांदोग्यश्रुतिमुदाहरति सतेति हे सोम्य तदा सुषुप्तौ सता सद्रूपेण ब्रह्मणा जीवः संपन्नो भेदं गतो भ वति स्वमपीतो विलीनः स्वेतरोहितोपाधिर्भवतीत्यर्थः॥ सतिसंपद्य न विदुरित्याद्याः श्रुतिरादिपदेन ग्राह्याः एवं नित्यप्रलयमभिधाय प्राकृतं निरूपयति प्राकृतेति सकलका र्यविनाशः प्रकृतौ लयः सुषुप्तेस्तु कार्यब्रह्मविनाशनिमित्तकसकलकार्यविनाशरूपत्वाभावान्नतत्रातिव्याप्तिः प्रागेवोत्पन्नपरब्रह्मसाक्षात्कारस्य हिरण्य।ः॥

गर्भस्य ब्रह्मांडाधिकारनिर्वाहकप्रारब्धकर्मपरिसमाप्तौ सत्यां परा विदेहकैवल्यात्मिका परममुक्तिस्तदा तल्लोकवासिनामप्युत्पन्नब्रह्मसाक्षात्काराणां ब्रह्मणा सह तथा मृत्मुक्तिरित्यर्थः ॥ उक्तार्थे श्रुतिं प्रमाणयति· ब्रह्मणेति· प्रतिसंचरे प्राकृते प्रलये संप्राप्ते सति परस्य हिरण्यगर्भस्यान्ते मुक्तिसमये ते सत्यलोकवासिनः कृतात्मानः प्राप्ततत्त्वसाक्षात्काराः सर्वे ब्रह्मणा सह परं पदं विदेहकैवल्यं प्रविशंतीत्यर्थः ॥ नन्वेवं तर्हि ब्राह्म्योयं प्रलयो न प्राकृत इत्याशंक्य तत्त्वविदां ब्रह्मप्रवेशेप्यतत्त्वविदां प्रकृतौ प्रवेशात्प्राकृत इत्याह· एवमिति· मायायां लयो निवृत्तिः तत्र हेतुमाह· बाधेति· ब्रह्मनिष्ठत्वात् ब्रह्मधर्मत्वात् ब्रह्मणि तदात्मना स्थितत्वादिति वा नैमि

एवं स्वर्लोकवासिभिः सह कार्यब्रह्मणि मुच्यमाने तदधिष्ठितब्रह्माण्डतदन्तर्वर्तिनिखिललोकतदन्तर्वर्तिस्थावरादीनां भौतिकानां भूतानां च प्रकृतौ मायायां चलयः न तु ब्रह्मणि बाधस्य विनाशस्यैव ब्रह्मनिष्ठत्वात् अतः प्राकृत इत्युच्यते कार्यब्रह्मणो दिवसावसाननिमित्तकस्त्रैलोक्यमात्रप्रलयः नैमित्तिकप्रलयः ब्रह्मणो दिवसश्चतुर्युगसहस्रपरिमितकालः चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते इति वचनात् ॥ प्रलयकालो दिवसकालपरिमितः रात्रिकालस्य दिवसकालतुल्यत्वात् प्राकृतप्रलये नैमित्तिकप्रलये च पुराणवचनानि· द्विपरार्द्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः तदा प्रकृतयः सप्त कल्प्यन्ते प्रलयाय हि एष प्राकृतको राजन् प्रलयो यत्र लीयते इति वचनं प्राकृतप्रलये मानं एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक् शेतेनन्तासने नित्यमात्मसात्कृत्य चाखिलमिति वचनं नैमित्तिकप्रलयमानम् तुरीयप्रलयस्तु· ब्रह्मसाक्षात्कारनिमित्तकः सर्वमोक्षः स चैकजीववादे युगपदेव नानाजीववादे तु क्रमेण सर्वे एकीभवन्तीत्यादिश्रुतेः तत्राद्यास्त्रयोपि लयाः कर्मोपरतिनिमित्ताः तुरीयस्तु ज्ञानोदयनिमित्तः लयो ज्ञानेन सहैवेति विशेषः ॥



त्तिकं तं दर्शयति· कार्येति· त्रैलोक्यं भूर्भुवः स्वरिति लोकत्रयं ब्रह्मदिवसस्य किंप्रमाणमित्यपेक्षायामाह· ब्रह्मण इति· नैमित्तिकप्रलयकालोप्येतावानेवेत्याह· प्रलयेति· आत्यंतिकं चतुर्थं प्रलयं निरूपयति· तुरीयेति· सर्वमोक्ष आत्मज्ञानेन सह कार्यविनाशः तुरीयप्रलये श्रुतिं प्रमाणयति सर्वेति· यत्र तु सर्वमात्मैवाभूत्तत्र केन कं पश्येदितीत्याद्याश्रुतिरादिपदेनादेया लयेत्वाविशेषेपि विशेषमाह· तत्रेति· तत्र चतुर्षु प्रलयेषु ॥ ॥

प्रलयनिरूपणमुपसंहरंस्तेक्रमेविप्रतिपत्तेस्तन्निरूपणंप्रतिजानीते· एषमिति· स्वसिद्धांतंवक्तुमादौन्यायमतंदूषयति· भूतानामिति· तर्हिकेनक्रमेणलयइ।
तिपृच्छति किंत्विति· उत्तरमाह· सृष्टीति· सृष्टिक्रमविपरीतक्रमेणलयइत्यनुषज्यते· तत्रहेतुमाह· तत्तत्कार्यनाशइति· अनुगतंहिप्रयोजकमस्यत्वननुगतत्वे
दप्रयोजकत्वमित्याशयः· विपक्षेदोषमाह· अन्यथेति· उपादाननाशस्यप्रयोजकत्वेसृष्टिक्रमविपरीतक्रमंदर्शयति· तथाचेति· कार्यावस्थानानुपपत्तेरननुगमाच्चोपा त २ का १
दाननाशस्याप्रयोजकतया। दृष्टनाशस्यप्रयोजकत्वेसति हिरण्यगर्भाहंकारेमहत्तत्वे· अत्रप्रमाणमाह· तदुक्तमिति· अत्रेन्द्रियादिहूरव्यतेर्लयोद्रष्टव्य आकाश
मिन्द्रियेष्विन्द्रियाणितन्मात्रेषुतन्मात्राणिभूतादौविलीयंतइतिसुबालोपनिषद्वचनानुसारात्· नचेदमप्रासंगिकंतत्पदार्थलक्षणस्यप्रलयपदार्थनिरूपणंवि
एवंचतुर्विधःप्रलयोनिरूपितःतस्येदानींक्रमोनिरूप्यते· भूतानांभौतिकानांचनकारणलयक्रमेणलयः कारणलयसमयकार्या
णामाश्रयांतराभावेनावस्थानानुपपत्तेः किंतुसृष्टिक्रमविपरीतक्रमेण तत्तत्कार्यनाशेतत्तज्जनकादृष्टनाशस्यैवप्रयोजकतया
49 उपादाननाशस्याप्रयोजकत्वात्॰ अन्यथान्यायमतेमहाप्रलयेपृथिवीपरमाणुगतरूपरसादेरविनाशापत्तेः तथाचपृथिव्याः अ
प्सुअप्पांतेजसितेजसोवायौवायोराकाशे आकाशस्यजीवाहंकारेतस्यहिरण्यगर्भाहंकारेतस्यचाविद्यायामित्येवंरूपाःप्रलयाः
तदुक्तम्· विष्णुपुराणे॰ जगत्प्रतिष्ठादेवर्षेपृथिव्यप्सुप्रलीयते· तेजस्यापःप्रलीयंतेतेजोवायौप्रलीयते· वायुश्चलीयतेव्योम्नितच्चा
व्यक्तेप्रलीयते· अव्यक्तंपुरुषेब्रह्मन्निष्कलेसंप्रलीयते· इति।एवंविधप्रलयकारणत्वंतत्पदार्थस्यब्रह्मणतटस्थलक्षणं-।।
ननुवेदांतैर्ब्रह्मणिजगत्कारणत्वेनप्रतिपाद्यमानेसतिसप्रपंचब्रह्मस्यादन्यथासृष्टिवाक्यानामप्रामाण्यापत्तेरितिचेन्न।।॰।।
नातद्बोधादित्याशयेनाह· एवंविधेति· ननूक्तमिदंतत्पदार्थलक्षणंयथार्थंकिंवाऽयथार्थं· आद्येब्रह्मणःसप्रपंचतापत्तिः नद्वितीयस्तत्प्रतिपादकश्रुत्या
दिवाक्यानामप्रामाण्यापत्तेरितिशंकते।। नन्विति।। यथाशाखाग्रासंलग्नस्यापिचंद्रस्यतदग्रसंलग्नताप्रकल्प्यशाखाग्रेचंद्रइति· तटस्थलक्षणम्।।त।।
थामिथ्याभूतस्यप्रपंचस्यब्रह्मासंबंधेपि· श्रुतिषुतद्बोधनायजगज्जनकत्वंप्रकल्प्यतल्लक्षणाभिधानान्नैवमित्याशयेनाह- नेति॰।।॰।।॰।।॰।।

नेहनानास्तिकिंचन नेनिरोधोनचोत्पत्तिरित्यादिश्रुतिबाधितेर्थेनास्तिसृष्टिश्रुतिवाक्यानांतात्पर्यंयेनतेषामप्रमाण्यंभवेदित्याह·नहीति·ननुप्रतीयमाने।
र्थेतात्पर्याभावेकुतइतितात्पर्यमितिपृच्छति·किंत्विति·विषंभुंक्ष्वेतिवाक्यस्याप्तवाक्यत्वाद्बाधितेप्रतीयमानेर्थेतात्पर्याभावेनशत्रुगृहभोजननिषेधपरत्वम्यथ
नयोक्तवाक्यानामपिश्रुतिबाधितप्रतीयमानार्थेतात्पर्यायोगेनाद्वितीयब्रह्मपरत्वेनतस्यैवप्रतिपादकत्वंयत्परःशब्दःसशब्दार्थः॥इत्यभियुक्तोक्तेरित्युत्तरमाह·द्वि
तीयइति·ननुशत्रुगृहभोजनाद्वरंविषभक्षणमितिप्रतीयमानार्थस्यपृथक्त्वात्तादृशभोजननिषेधप्रतिपत्तौविनियोगस्तथात्रकथंसृष्टेरद्वितीयब्रह्मावबोधने
विनियोगःप्रपंचनिषेधपरैरेवतत्प्रतिपत्तेःस्पष्टतयाप्रतीयमानान्यार्थकैर्वाक्यैस्तद्बोधनस्यव्यर्थत्वादित्याशयेनशंकते·तदिति·यस्मिन्ब्रह्मणिप्रपंचनिषेध

नहिसृष्टिवाक्यानांसृष्टौतात्पर्यंकिंत्वद्वितीयेब्रह्मण्येव·तत्प्रतिपत्तौकथंसृष्टेरुपयोगः इत्थंयदिसृष्टिमनुपन्यस्यनिषेधोब्रह्म।
णिप्रपंचस्यप्रतिपाद्येततदाब्रह्मणिनिषिद्धस्यप्रपंचस्यवायोःप्रतिषिद्धस्वरूपस्येवब्रह्मणोन्यत्रावस्थानेशंकायांननिर्विचिकित्समन्
द्वितीयत्वंप्रतिपादितंस्यात्ततःसृष्टिवाक्याद्ब्रह्मोपादेयत्वज्ञानेसत्युपादानंविनाकार्यस्यान्यत्रसद्भावशंकायानिरस्तायांनेतिनेतीत्यादि
नाब्रह्मण्यपितस्यासत्वोपपादनेप्रपंचस्यतुच्छत्वावगमेनिरस्ताखिलद्वैतविभ्रममखंडसच्चिदानंदैकरसंब्रह्मसिद्ध्यतीतिपरंपरयासृ
ष्टिवाक्यानामप्यद्वितीयेब्रह्मण्येवतात्पर्यम्॥उपासनाप्रकरणपठितसगुणब्रह्मवाक्यानांचोपासनाविध्यपेक्षितगुणारोपमात्रपरत्वेन
गुणपरत्वेनिर्गुणप्रकरणपठितानांसगुणवाक्यानांतुनिषेधवाक्यापेक्षितनिषेध्यसंपादकत्वेनविनियोगइति·नकिंचिदपिवाक्यमद्वि
तीयब्रह्मप्रतिपादनेनविरुध्यते·नदेवंस्वरूपतटस्थलक्षणलक्षितंतत्पदवाच्यमीश्वरचैतन्यंमायाप्रतिबिंबितमितिकिंचित्॥ स्तद्ब्रह्मैवज।

गदुपादानमतस्तस्यान्यत्रावस्थानाशंकाभावेननिःसंशयतयामिथ्यात्वसिद्धेरद्वितीयंब्रह्मसिद्ध्यतीत्येवंतत्प्रतिपत्तौप्रतीयमानार्थविनियोगइतिसमाधत्ते·इत्थ
मिति·निर्विचिकित्संसंशयरहितं·नन्वेवंसृष्टिवाक्यानामद्वितीयब्रह्मबोधकत्वेपिनिर्विचिकित्समद्वितीयत्वंनसिध्यति·यएषोन्तरादित्येहिरण्मयःपुरुष
इत्यादिवाक्यैःसगुणब्रह्मप्रतिपादनादित्याशंक्याहोपासनेति·योषिद्वावगौतमाग्निरित्यादिवदारोपितगुणेनाप्युपासनासंभवेनकेवलोनिर्गुणश्चेत्यादिश्रुति
विरुद्धार्थपरत्वमुक्तवाक्यानामयुक्तंतथाचसगुणब्रह्मवाक्यानिचित्तैकाग्र्यद्वाराद्वितीयब्रह्मबोधकानीतिभावः·मूर्तंचामूर्तंचमर्त्यंचामृतंचेत्यादिवाक्या॥

नांविनिश्चयमाहद्वितीयं॥

अथात आदेशो नेति नेतीत्यादीनि निषेधवाक्यानि कर्मकांडवाक्यानामपि व्यावहारिकप्रामाण्यवतां संयोगपृथक्त्वन्यायेनाद्वितीयब्रह्मप्रतिपत्तौ विनियोगमभिप्रेत्याह न किंचिदपीति· ननु किं तल्लक्षणं यस्येदं लक्षणद्वयमुच्यत इत्याकांक्षायामाह· तदेवमिति नन्वविद्यातो मायाभेदाभावात्तत्प्रतिबिंबितस्य च जीवत्वात्कथं मायायां प्रतिबिंबितं चैतन्यमीश्वर इत्याशंक्याह· तेषामिति· तन्मते जीवेश्वरविभागमाह तदिति· एवंविधानेकजीववादे दूषणाभिधानपूर्वकं मतांतरमवतारयति· एतन्मत इति· अस्मिन्पक्षे मतद्वयमाह· बिंबप्रतिबिंबेति· नन्वस्मिन्मते पूर्वोक्तदोषाभावेपि दोषांतरमस्तीति शंकते· नन्विति· बिंबस्य प्रतिबिंबदेशावर्तित्वनियमादिति भावः उक्तनियमस्या

तेषामयमाशयः जीवपरमेश्वरसाधारणं चैतन्यमात्रं बिंबं तस्यैव बिंबस्याऽविद्यात्मिकायां मायायां प्रतिबिंबमीश्वरचैतन्यमतःकरणेषु प्रतिबिंबं जीवचैतन्यं कार्योपाधिरयं जीवः कारणोपाधिरीश्वर इति श्रुतेः एतन्मते जलाशयगतशरावगतसूर्यप्रतिबिंबयोरिव जीवपरमेश्वरयोर्भेदः अविद्यात्मकोपाधेर्व्यापकतया तदुपाधिकेश्वरस्यापि व्यापकत्वं अंतःकरणस्य परिच्छिन्नतया तदुपाधिकजीवस्यापि परिच्छिन्नत्वं एतन्मतेऽविद्याकृतदोषा जीव इव परमेश्वरेपि स्युरुपाधेः प्रतिबिंबपक्षपातित्वादित्यस्वरसात् बिंबात्मकमीश्वरचैतन्यमित्यपरे· तेषामयमाशयः एकमेव चैतन्यं बिंबत्वाक्रांतमीश्वरचैतन्यं प्रतिबिंबत्वाक्रांतं जीवचैतन्यं· बिंबप्रतिबिंबकल्पनोपाधिश्चैकजीववादे अविद्या अनेकजीववादे तु अंतःकरणान्येवाऽविद्यांतःकरणरूपोपाधिप्रयुक्तो जीवपरभेदः। उपाधिकृतदोषाश्च प्रतिबिंबे जीव एव वर्तंते न तु बिंबे परमेश्वरे उपाधेः प्रतिबिंबपक्षपातित्वात् एतन्मते च गगनसूर्यस्य जलादौ भासमानप्रतिबिंबसूर्यस्येव जीवपरयोर्भेदः। ननु ग्रीवास्थमुखस्य दर्पणप्रदेश इव बिंबचैतन्यस्य परमेश्वरस्य जीवप्रदेशेऽभावात्तस्य सर्वांतर्यामित्वं न स्यादिति चेन्न· साभ्रनक्षत्रस्य आकाशस्य जलादौ प्रतिबिंबितत्वे बिंबभूतमहाकाशस्यापि जलादिप्रदेशसंबंधदर्शनेन परिच्छिन्नबिंबस्य प्रतिबिंबदेशासंबंधित्वेप्यपरिच्छिन्नब्रह्मबिंबस्य प्रतिबिंबदेशसंबंधाविरोधात्

काशे व्यभिचारात् परिच्छिन्नबिंबस्य तथात्वेप्यपरिच्छिन्नबिंबस्य तथात्वाभावान्नैवमित्याह· नेति· जलादिष्वाकाशमेव भातीति शंकानिरासार्थमुक्तं साभ्रेति· नन्वभ्रादिकमेव तत्र प्रतिबिंबितं नाकाशं तस्य रूपरहितत्वाद्रूपवत एव प्रतिबिंबितत्वदर्शनात् तथा च नीरूपस्य ब्रह्मणो न प्रतिबिंबसंभव इत्याशंक्य परिहरति· न चेति· किं रूपवत एव प्रतिबिंबं उत रूपवतो द्रव्यस्येति विकल्प्याद्यं प्रत्याह· नीरूपस्यापीति· द्वितीयमनूद्य दूषयति· न चेति· यतः समवायिकारणं गुणाश्रयो वा द्रव्यमतः आत्मनस्तु निर्गुणत्वात्तस्

तथा च नीरूपस्य द्रव्यस्याकाशादेः प्रतिबिंबानभ्युपगमेपि नीरूपस्याद्रव्यस्य ब्रह्मणो रूपवत्प्रतिबिंबसंभवत्येवेति भावः॥ द्रव्यत्वाभ्युपगमेपि दोषाभाव इत्यभिप्रेत्याहेत्वंत रमाहैकधेति· एकधा ईश्वररूपेणैकः बहुधाः जीवात्मना नानारूप आदिपदेन उपाधिनाक्रियते भेदरूपो देवः क्षेत्रष्वेवमजो यमात्मेति वाक्यशेषो ग्राह्यः ब्रह्मप्रतिबिंबा भावानुमानस्य ब्रह्मन प्रतिबिंबतु महत्त्वचाक्षुषत्वाद्यंधादिवदित्येवंरूपस्यानुमानस्य· तथा च भगवतो बादरायणस्य सूत्रं· आभास एव च· अत एव चोपमा सूर्यकादिवदिति· अत्र विस्तरभयात् मूलकृत्यतो वच्छेदवादो पि द्रष्टव्यः तथा हि घटाकाशवदंतःकरणावच्छिन्नं चैतन्यं जीवस्तदनवच्छिन्नं तदीश्वरः आलोकप्रतिबिंबेगगनप्रतिबिं बितत्वव्यवहारस्य भ्रममात्रमूलकतया बिंबस्य प्रतिबिंबस्यानावस्थानाभावनियमस्य भंगाभावाद्ब्रह्मप्रतिबिंबो नयुक्तः ननु ब्रह्मांडांतरवर्तितदंतःकरणोपाधिभिन्नदं तवर्ति चैतन्यस्य सर्वात्मना जीवभावेनावच्छेदान्तवच्छेदरहितचैतन्यात्मकस्येश्वरस्य ब्रह्मांडांतरासत्वापत्तिस्त्रापि समानेति चेन्न· अविद्याश्रयत्वात्· करणसंवलि तत्वाद्युपाधिकाज्जीवाद्भिन्नस्याविद्याविषयत्वात्ः करणासंवलितत्वाद्युपाधिकस्यांतर्यामिण ईश्वरस्य ब्रह्मांडांतरवस्थानसंभवात्· न च कार्योपाधिरयं जीवः कर।

न च रूपहीनस्य ब्रह्मणो न प्रतिबिंबसंभवः रूपवत एव तथात्वदर्शनादिति वाच्यम्· न रूपस्यापि रूपस्य प्रतिबिंबदर्शनात्· न च नीरूप स्य द्रव्यस्य प्रतिबिंबाभावनियमः आत्मनो द्रव्यत्वाभावस्योक्तत्वात्· एकधा बहुधा चैव दृश्यते जलचन्द्रवत्· यथा ह्ययं ज्योतिरात्मा वि वस्वानयो भिन्ना बहुधैकोनुगच्छन्नित्यादिवाक्ये न ब्रह्मप्रतिबिंबाभावानुमानस्य बाधितत्वाच्च· तदेवं तत्पदार्थो निरूपितः॥ ११ गुणोपाधिरीश्वर इति

वाक्यविरोधः तस्य पक्षद्वयेपि तुल्यत्वात्· कारणावच्छिन्नस्य कार्यानवच्छिन्नत्वे बाधकाभावान्न चास्मिन्पक्षे श्रुतिसूत्रविरोधः भाष्यकारैरेवात एव चेति· सूत्रं व्याख्या य सूर्यादिवदात्मनः प्रतिबिंबो न युज्यत्वत इति· तदा क्षेपकत्वेनाम्बुवदग्रहणात्तु न तथात्वमिति सूत्रं व्याख्याय वृद्धिह्रासभाक्त्वमंतर्भावादुभयसामंजस्यादेवमिति सूत्रे उक्ता नुपपत्तिमंगीत्यैव श्रुत्युक्तदृष्टांतस्य सोपाधिकस्यात्मनो वृद्धिह्रासादिभाक्त्वेन निरूपाधिकस्येति प्रदर्शनार्थत्वेन चात्मा प्रतिबिंबत इत्यभिहितत्वात्· बृहदारण्यकभा ष्यादौ प्रतिबिंबरूपेण प्रवेशो न संभवतीत्युक्तत्वाच्चेति· संक्षेपः। विस्तरस्त्वन्यत्र द्रष्टव्यः मूलकर्तुरप्ययमेव पक्षोभिप्रेतः प्रत्यक्षपरिच्छेदे ईश्वरसाक्षीत्वादिप्रकरणए नस्य पक्षस्य स्वसंमतत्वेन सूचितत्वात्तत्पदार्थनिरूपणमुपसंहरंस्त्वंपदार्थनिरूपणं प्रतिजानीते· तदेवमिति· नत्रैकजीववादे तत्स्वरूपमाहैकेति· अविद्याया ए। कत्वेन तत्प्रतिबिंबस्य जीवस्याप्येकत्वौचित्यादिति भावः॥ तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथा ऋषीणां तथा मनुष्याणां यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चर

सर्वं एत आत्मान इत्यादिश्रुतेः मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते इत्यादिस्मृतेः भोगेन त्वितरे क्षपयित्वा संपद्यत इत्यादिसूत्राच्च स्वात्मभूताव घटाकाशस्था
नीयानविद्योपस्थापिततनामरूपकृतकार्यकारणसंघातानुरोधिनो जीवाख्यानज्ञानात्मनः प्रतीपुरित्यादिभाष्याद्धनेतजीवभिर्भासास्पदमेकरसे ब्रह्मेति पद्मपा
दाचार्येति एकजीवावादो युक्त इत्यभिप्रेत्याहानेकेति इदमुपलक्षणमविद्यावच्छिन्नो जीव इति मतस्यापि मायाभिरिति बहुवचनादविद्यायास्तच्छक्तेर्वा
नानात्वाज्जीवनानात्वं अजामित्येकवचनं तु जात्यभिप्रायकं न च कार्योपाधिरयं जीव इति वाक्यविरोधः समाहितत्वात् स्वमपीतो भवतीति श्रुतिस्तु तदानी
मतः करणलयेकत्वाद्यभावादुपपन्ना गत्यादिकमप्यातिवाहिकशरीरगमनादिप्रयुक्तमित्यविरोधः। तस्योपाधिगतावस्थावत्त्वमाह सचेति तुरीयावस्थातूपाधि

इदानीं त्वंपदार्थो निरूप्यते एकजीववादे विद्याप्रतिबिंबो जीवः। अनेकजीववादे अंतःकरणप्रतिबिंबः स च जाग्रत्स्वप्नसुषुप्तिरूपा
वस्थात्रयवान् तत्र जाग्रद्दशा नामेन्द्रियजन्यज्ञानावस्था अवस्थांतरइन्द्रियाभावान्नातिव्याप्तिः इन्द्रियजन्यज्ञानं चांतःकरणवृत्तिः
स्वरूपज्ञानस्यानादित्वात् स चान्तःकरणवृत्तिरावरणाभिभवार्थेत्येकं मतं तथाहि अविद्योपहितचैतन्यस्य जीवत्वपक्षे घटाद्यधि
ष्ठानचैतन्यस्य जीवरूपतया जीवस्य सर्वदा घटादिभानप्रसक्तौ घटाद्यवच्छिन्नचैतन्यावरकमज्ञानं मूलाविद्यापरतंत्रमवस्थापद
वाच्यमभ्युपगन्तव्यम्॥ ११॥ तादात्म्याध्यासनिवृत्तिकालीनात्तदुपहितचैतन्यस्य जीवस्य जाग्रदाद्यवस्थात्रयवत्त्वं लक्षणमुक्तम्॥ तत्र जाग्रदवस्थां लक्षयति
जाग्रदिति इन्द्रियजन्यज्ञानयोग्यसमय इत्यर्थः॥ इन्द्रियजन्येति पदकृत्यमाहावस्थान्तर इति स्वप्नसुषुप्त्यवस्थयोरित्यर्थः॥ इन्द्रियजन्यज्ञानस्वरूपमूकिभि
त्याकांक्षायामाहेन्द्रियजन्येति चैतन्यरूपं ज्ञानं कुतो नेत्यत आह स्वरूपेति ननु स्वरूपज्ञानेनैव सर्वदा सिद्धेन विषयप्रकाशसिद्धौ तज्जन्या वृत्तिः किमर्थेत्यत आ
ह सा चेति नन्वावरणभंगोपि चैतन्येनैव भविष्यतीत्याशंक्याह तथाहीति अविद्योपहितस्य तत्प्रतिबिंबस्य तदवच्छिन्नस्य वा सर्वदा भानप्रसक्तिवारणायावर
णरूपमूलाज्ञानशक्तिविशेषस्यावश्यकत्वे तद्भंगं विना कदापि भानं न स्यादतस्तद्भंग आवश्यक इत्यर्थः॥ आवरणभंगोपि चैतन्येनेत्यत्र किं चैतन्यमात्रेण किं
वोपहितचैतन्येनेति विकल्प्याद्यं प्रत्याह नेति तद्भासकस्य तत्सत्तास्फूर्तिप्रदस्य तस्य तन्निवर्तकत्वे कदाप्यावरणस्यावस्थानं न स्यादेतेनेत्तरणादिप्रकाशक॥

51

सकत्वविवर्तकत्वयोर्विरोध इति प्रत्युक्तं वह्नेस्तृणादेः सतास्फूर्तिप्रदत्वरूपभासकत्वाभावात् द्वितीयं निरस्यति· नापीति· वृत्तिविशेषस्य घटाद्याकारायास्तत्तद्धेतेः श्चेतेर्जडत्वात्कार्थं तयावरणनिवृत्तिरिति चेत्तत्राह· तदुपहितेति· तादृशवृत्तेरभिव्यंजिकाया आवश्यकत्वेन वृत्तिरेव लब्धेत्याहेतीति· इत्येकं मतमित्युक्तिसूचितं द्वितीयं मतं दर्शयति· संबंधार्थेति· तत्र तस्मिन्मते· अविद्योपाधिकः परिच्छिन्नो जीव इति मतद्वयमित्यर्थः॥ ननु संबंधाभावः संबंधप्रयोजकाभावादुच्यते· किं

एवं सति घटादेर्न सर्वदा भानप्रसंगः अनावृतचैतन्यसंबंधस्यैव भानप्रयोजकत्वात् तस्य चावरणस्य सद्भावान्न त्वेकदाचिदपि घटभानं न स्यादिति· तद्भंगे वक्तव्ये तद्भंगजनकं न चैतन्यमात्रं तद्भासकस्य तदनिवर्तकत्वात् नापि वृत्त्युपहितचैतन्यं परोक्षस्थलेऽपि तन्निवृत्त्यापत्तेरिति परोक्षवृत्तिव्यावृत्तवृत्तिविशेषस्य तदुपहितचैतन्यस्य वावरणभंगजनकत्वमित्यावरणाभिभवार्था वृत्तिरित्यु[illegible]ते इत्येकं मतं संबंधार्था वृत्तिरित्यपरं मतम्· तत्राविद्योपाधिकः परिच्छिन्नो जीवः स च घटादिप्रदेशे विद्यमानोऽपि घटाद्याकारापरोक्षवृत्तिविरहदशायां न घटादिकमवभासयति घटादिना तस्य संबंधाभावात् तदाकारवृत्तिदशायां तु भासयति तदा संबंधसत्वात्· नन्वविद्योपाधिकस्यापरिच्छिन्नस्य जीवस्य स्वत एव समस्तवस्तुसंबंधस्य वृत्तिविरहदशायां संबंधाभावाभिधानमसंगतम्· असंगत्वदृष्ट्या संबंधाभावाभिधाने वृत्त्यनंतरमपि संबंधो न स्यादिति चेत्· उच्यते न हि वृत्तिविरहदशायां जीवस्य घटादिना सह संबंधसामान्यं निषेधामः किंतर्हि घटादिभानप्रयोजकसंबंधविशेषं स च संबंधविशेषो विषयस्य जीवचैतन्यव्यं[illegible]व्यंजकतालक्षणः कादाचित्कः तत्तदाकारवृत्तिनिबंधनः॥ः

चात्मनोऽसंगतत्वान्नाद्यः परिच्छेदशून्यस्य घटादिसंबंधे प्रयोजकाकांक्षाभावान्न द्वितीयः वृत्तेनंतरमपि तस्य दुर्घटत्वादिति शंकते· नन्विति· असंगत्वेति· असंगो न हि सज्जत इति श्रुत्युक्तपारमार्थिकासंगत्वदृष्ट्येत्यर्थः॥ व्यवहारापादितसंबंधसामान्यं नास्माकं निषेध्यमतो नास्मदुक्तिरसंगतेत्याह· नहीति· पृच्छति किंतर्हीति उत्तरमाह· घटादीति· निषेधाम इत्यनुषज्यते· ननु स च संबंधः संयोगः समवायो वा नाद्यः अपरिच्छिन्ने जीवे घटादेः सर्वदा संयुक्तत्वेन सर्वदा भानप्रसंगात्· न द्वितीयः अनंगीकारादंगीकारे च तस्य नित्यत्वेनोक्तदोषादित्याशंक्याह· स चेति· घटाद्याकारवृत्तिसमये तदुपहितजीवचैतन्यस्य व्यंग्यत्वं तद्विषयस्य घटादेर्व्यंजकत्व



ज्य५

ननु घटादेस्स्वच्छस्यस्वाकारवृत्तिदशायामपि कथमभिव्यंजकत्वमित्यपेक्षयामाह· तथाहीति· नतथात्वतः जीवचैतन्याभिव्यंजनसमर्थनं भवति· कथं तर्हि तत्
तत्समर्थमिति तत्राह· स्वाकारेति· वृत्त्या अभिभूतस्तिरस्कृतो जाड्यधर्मो यस्य तत्तथा वृत्त्या उत्पादिता या चैतन्याभिव्यंजनयोग्यता तदाश्रयतया चेत्यर्थः॥ अभिव्यन
क्ति घटादिकमिति कर्तृपदमनुषज्यते तत्र संमतिमाह· तदुक्तमिति· नन्वस्वच्छद्रव्यस्य प्रतिविंबग्राहित्वं न दृष्टचरमित्याशंक्याह· दृष्टं चेति· ननु घटादेरस्वच्छद्रव्य
तथाहि तेजसमंतःकरणं स्वच्छद्रव्यत्वात् स्वत एव जीवचैतन्याभिव्यंजनसमर्थं घटादिकं तु न तथा अस्वच्छद्रव्यत्वात् स्वाकारवृत्तिसं
योगदशायां तु वृत्त्यभिभूतजाड्यधर्मकतया वृत्त्यादित चैतन्याभिव्यंजनयोग्यताश्रयतया च वृत्त्युत्थानानंतरं चैतन्यमभिव्यनक्ति· तदुक्तं
विवरणे· अंतःकरणं हि स्वस्मिन्निव स्वसंसर्गिण्यपि घटादौ चैतन्याभिव्यक्तियोग्यतामापादयतीतिः दृष्टं चास्वच्छद्रव्यस्यापि स्वच्छद्रव्य
संबंधदशायां प्रतिविंबग्राहित्वम्· यथा कुड्यादेर्जलादिसंयोगदशायां मुखादिप्रतिविंबग्राहिता· घटादेरभिव्यंजकत्वं च तत्प्रतिविंबग्राहित्वं।
चैतन्याभिव्यक्तत्वं च तत्प्रतिविंबितत्वम्· एवंविधाभिव्यंजकत्वसिद्ध्यर्थमेव वृत्तेरपरोक्षस्थले वहिर्निर्गमनांगीकारः· परोक्षस्थले तु व
ह्न्यादेर्वृत्तिसंसर्गाभावेन चैतन्यानभिव्यंजकतया न वह्न्यादेरपरोक्षत्वम्· एतन्मते च विषयाणामपरोक्षत्वं चैतन्याभिव्यंजकत्वमिति
द्रष्टव्यम्· एवं जीवस्यापरिच्छिन्नत्वेपि वृत्तेः संबंधार्थत्वं निरूपितं· इदानीं परिच्छिन्नत्वपक्षे संबंधार्थकत्वं निरूप्यते· तथाहि· अंतःकर
णोपाधिको जीवः तस्य न घटाद्युपादानता घटादिदेशासंबंधात्· किंतु ब्रह्मैव घटाद्युपादानं तस्य मायोनपहितस्य सकलघटाद्यन्वयित्वात्·
स्य चैतन्याभिव्यंजकत्वदृष्टांतस्य वक्तव्यत्वे प्रतिविंबग्राहिकुड्यादिनिदर्शनप्रदानमसंगतमित्याशंक्याह· घटादेरिति· इदं च वृत्तिं विना न सिद्ध्यतीति तादृशसंबंधप्र
योजकतानस्याइत्याहेवमिति ननु वृत्तेरेवंविधसंबंधार्थाभ्युपगमे कथं घटादेरपरोक्षत्वं विषयस्य प्रमातृचैतन्याभिन्नत्वमपरोक्षत्वमुक्तत्वादित्याशंक्याहे।
तन्मत इति· इदमुपसंहरन्मतांतरं संबंधार्थत्वोपपादनं प्रतिजानीते· एवमिति· अंतःकरणोपाधिकस्तत्प्रतिविंबस्तदवच्छिन्नो वा तस्मिन्मते घटाद्यु

S2

वेदांतसिद्धांतटी॰ ॥

त्वा २

वे.प. किंत्विति·उत्तरमाह·अस्त्वेवेति·ननुतस्यव्यापकत्वेपिकेवलस्यासंगितयाकथंघटादिदेशसंबंधइत्याशंक्यकेवलस्यतदसंभवेपिमायोपाधिकस्यमाया।
टी.टी. द्वारकसंबंधसंभवादित्याह·तस्येति·मायोपहितस्यतदवच्छिन्नस्यतस्यप्रतिविंवस्यवातद्विंवस्यवातदधिष्ठातृत्वात्तद्विषयस्यवा·एतेनप्रकृतेकिमायातमित्यत।
५२ आह·तथाचेति·अंतःकरणोपाधिकचैतन्यस्यघटादिदेशानवस्थितत्वस्यतदधिष्ठानचैतन्याभिन्नत्वाभावेउक्तंविस्मृत्यशंकते·नन्विति·प्रोक्तंस्मारयति·वृत्तेरि

अतएवब्रह्मणःसर्वज्ञतातथाचजीवस्यघटाद्यधिष्ठानब्रह्मचैतन्याभेदमंतरेणघटाद्यवभासासंभवेप्राप्तेतदवभासाय।
घटाद्यधिष्ठानब्रह्मचैतन्याभेदसिद्ध्यर्थंघटाद्याकारवृत्तिरिष्यते।ननुवृत्त्यापिकथंप्रमातृचैतन्यविषयचैतन्ययोरभेदःसंपाद्य
तेघटांतःकरणरूपोपाधिभेदेनतदवच्छिन्नचैतन्ययोरभेदासंभवादितिचेन्नवृत्तेर्बहिर्देशनिर्गमनांगीकारेणवृत्त्यंतःकरण
विषयाणामेकदेशस्थत्वेनतदुपधेभेदाभावस्योक्तत्वात्‌·एवमपरोक्षस्थलेवृत्तेर्मतभेदेनविनियोगउपपादितःइन्द्रियाज
न्यविषयगोचरापरोक्षांतःकरणवृत्त्यवस्थास्वप्नावस्थाजाग्रदवस्थाव्यावृत्त्यर्थंइन्द्रियाजन्येति·अविद्यावृत्तिमत्यांसुषु
प्तौअतिव्याप्तिवारणायांतःकरणेतिसुषुप्तिर्नामाविद्यागोचराविद्यावृत्त्यवस्थाजाग्रत्स्वप्नयोरविद्याकारवृत्तेरंतःकरणवृ
त्तित्वान्नतत्रातिव्याप्तिःअत्रकेचिन्मरणमूर्छयोरवस्थांतरत्वमाहुःसुषुप्तावेवतयोरंतर्भावमाहुः॥॥॥॥॥।

ति·वृत्तिविनियोगोपपादनमुपसंहरति·एवमिति·अथस्वप्नावस्थांलक्षयति·इन्द्रियेतिइन्द्रियाजन्याविषयगोचराअंतःकरणवृत्तिर्यस्मिन्समयेसाम
न्तथाभूतवृत्त्यवस्थासुषुप्तिंलक्षयति·सुषुप्तिरिति·अविद्याऽज्ञानंसागोचरोविषयोयस्याःसाक्षादविद्यावृत्तेस्तदवस्थाअविद्यापदंनित्यसुखस्याप्युपलक्ष। राम
णम्·चेन्नुमरणमूर्छयोरपिनिरूपणीयत्वात्किमित्यवस्थात्रयमेवनिरूपितमित्याशंक्याहात्रेति·अवस्थानिरूपणप्रसंगेभवत्संमतंकिमित्यपेक्षायामाह॥ ५२

तत्रेति· तयोर्मतयोः रित्यर्थः अवस्थात्रयवाञ्जीवइत्युक्तं तत्रावस्थारूपमभिधाय तद्वान्‌जीवएक उतानेकइत्यपेक्षायामाह·तस्येति· तस्योक्तावस्थावतोजीवस्यतथाचविभुर्मध्यमपरिमाणोवाजीवइत्यर्थः। एतेनजीवस्यविभुत्वादिप्रदर्शनेनाणुत्वंरामानुजाद्युक्तंनतुवालाग्रशतभागस्यशतधाकल्पितस्यचजीवोभागःसविज्ञेयःसचानन्त्यायकल्पतइत्यादिश्रुतिविरोधस्स्यादित्याशंकामहतोमहीयानित्यादिश्रुत्यासंवीर्गाणगुणवाद्युपलब्ध्वाचश्रुइस्यदुर्लक्ष्यत्वाभिप्रायमेवाणुत्वंसोपाधिकस्यत्वंतःकरणस्यसुपाधिकृतमित्यविरोधइत्याशयेनाह·वुद्धेरिति· नैयायिकादिमतनिरासायाह·सच्चेति· तत्रवृहदारण्यश्रुतिप्रमाणयति· स्वप्नाव

तत्रतयोरवस्थात्रयातभाववहिर्मानयोस्त्वंपदार्थनिरूपणेउपयोगाभावान्नतत्रप्रयत्यते· तस्यचमायोपाध्यपेक्षयैकत्वमंतःकरणोपाध्यपेक्षयाचनानात्वंव्यवह्रियेते· एतेनजीवस्याणुत्वंप्रत्युक्तम्·वुद्धेर्गुणेनात्मगुणेनचैवह्याराग्रमात्रोह्यवरोपिदृष्टइत्यादौजीवस्यवुद्धिशब्दवाच्यांतःकरणपरिमाणोपाधिकपरिमाणश्रवणात्‌सच्चजीवःस्वयंप्रकाशःस्वप्नावस्थामधिकृत्यात्रायंपुरुषःस्वयंज्योतिरितिश्रुतेःअनुभवरूपश्चप्रज्ञानघनइत्यादिश्रुतेः॥अनुभवामीतिव्यवहारस्तुवृत्तिप्रतिविंवचैतन्यमादायोपपद्यते· एवंत्वपदार्थोनिरूपितः॥अधुनातत्त्वंपदार्थयोरैक्यंमहावाक्यप्रतिपाद्यमभिधीयते०॥

स्थामिति·अयंपुरुषइत्यनेनपरमाभिहितइतिभ्रमव्यवच्छेदार्थमुक्तम्·स्वप्नेति०वृत्त्यादिवज्जडत्वमाशंक्याहाऽनुभवरूपमयश्चेति· अन्‌पिप्रमाणमाह·प्रज्ञानेति·विज्ञानमूर्तिरित्यर्थः योयंविज्ञानंघनइत्यादिश्रुतिःशादिपदार्देयाअात्मनःस्वप्रकाशत्वंज्ञानरूपत्वंचसाधितमाघपद्यविवरणे·ननुतस्यानुभवरूपत्वेऽनुभवामीत्यनुभवाश्रयत्वेव्यपदेशानुपपत्तिरित्याशंक्याहानुभवामितिः त्वंपदार्थानिरूपणमुपसंहरन्नखंडार्थमतिपादनंप्रतिजानीते·एवमिति·प्रज्ञानंब्रह्म·अहंब्रह्मास्मितत्त्वमस्यियमात्माब्रह्मेत्येवंरूपैर्ऋग्वेदादिमहावाक्यैर्महत्त्वंगुरुत्वंज्ञानमनंतंब्रह्मेत्याद्यवांतरवाक्यापेक्षयाप्रतिपाद्यंतात्पर्यविषयत्वेनवोधनीयंतत्प्रतिपादना



S3

आदिपदेनदुःख्यहंसंसारीहमित्यादिप्रत्यक्षंग्राह्यंतत्त्वंपदार्थेनपरस्यराभिन्नौविरुद्धधर्माश्रयत्वाद्धिरुद्धस्वभावत्वात्तेजस्तिमिरवत्‌॰ द्वासुपर्णासयुजासखायास मानंवृक्षंपरिषस्वजातेतयोरन्यः पिप्पलंस्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति॰ ऋतंपिवंतौसुकृतस्यलोकेगुहांप्रविष्टौपरमेपरार्द्धेछायातपौब्रह्मविदोवदंति॰पंचाग्न योयेचत्रिणाचिकेताउत्तमःपुरुषस्त्वन्यः परमात्मेत्युदाहृतः।सत्यंभेदंविनानुपपद्यमानमुपलभ्यमानंजीवस्यसंसारित्वंश्रूयमाणंचेश्वरस्यासंसारित्वम्‌॰सत्यंभेदं कल्पयतियदिजीवस्यपरमात्मनाभेदःस्यात्‌ तर्ह्युपलभ्येतनोपलभ्यतेऽतोनास्तीतिनिश्चीयतइतिप्रत्यक्षादिप्रमाणेजीवेश्वरभेदस्यावगतत्वात्तत्त्वमस्यादिवाक्य मुपचरितार्थंगौणार्थमेवादित्योयूपःयजमानःप्रस्तरइत्यादिवाक्यवत्‌॰ यथाऽनादित्येयूपेआदित्यत्वस्यायजमानभूतायांदर्भमुष्टौचयजमानत्वस्योपचारस्तद्व दित्यर्थःव्यवहारिकभेदावेदकप्रत्यक्षादिप्रमाणैस्तात्त्विकाभेदावेदकश्रुतिविरोधाभावान्नैवमित्याह॰ नेति॰स्याद्विरोधस्तथापिश्रुत्याप्रत्यक्षादेर्बाध इत्याशये

ननुनाहमीश्वरइत्यादिप्रत्यक्षेणकिंचिज्ज्ञत्वसर्वज्ञत्वविरुद्धधर्माश्रयत्वादिलिंगेनद्वासुपर्णेत्यादिश्रुत्याद्वाविमौपुरुषौलोके क्षरश्चाक्षरएवचक्षरःसर्वाणिभूतानिकूटस्थोऽक्षरउच्यते इत्यादिस्मृत्याचजीवपरभेदस्यावगतत्वेनतत्त्वमस्यादिवाक्यमादित्यो यूपोयजमानःप्रस्तरइत्यादिवाक्यवत्‌उपचरितार्थमेवेति॰चेन्नभेदप्रत्यक्षस्यसंभावितकरणदोषस्यासंभावितदोषवेदजन्य ज्ञानेनबाध्यमानत्वात्‌॰ अन्यथाचंद्रगताधिकपरिमाणग्राहिज्योतिःशास्त्रस्यचंद्रप्रादेशग्राहिप्रत्यक्षेणबाधापत्तेःपाकरक्तघटे ऽतोयंनश्यामइतिवत्तत्रविशेषणेहीतिन्यायेनजीवपरभेदग्राहिप्रत्यक्षस्यविशेषणीभूतधर्मभेदविषयत्वाच्च॥ नादौप्रत्यक्षस्यबाध्यत्व

योग्यतामाह॰भेदेति॰ संभाविताःकरणानामिंद्रियाणामपाटवत्वाद्यो दोषायस्मिन्‌॰सतथातस्येत्यर्थः॰ननुज्येष्ठेनप्रत्यक्षेणैवतद्बाधउचितइत्याशंक्यज्येष्ठत्वंहि बाध्यत्वेहेतुर्नतुबाधकतायांकनीयसाश्रुतिज्ञानेनज्येष्ठस्यरजतज्ञानस्यबाधदर्शनादन्यथा तदुत्पत्त्यसंभवाच्चंद्रादिपरिमाणग्राहिशास्त्रबाधापत्तेश्चेत्याशये॥ नाहान्यथेति॰ नचोपजीव्यविरोधःधर्मभेदबोधकप्रत्यक्षस्यधर्मिभेदज्ञानंप्रत्यनुपजीव्यत्वादित्याशयेनाह॥ पाकेनि॥ तथाचैवंभूतज्ञानेसत्यपिधर्मिभेदभा ॥दायसोयंघटइतिज्ञानंयथाऽविरुद्धंतद्वन्नाहमीश्वरइतिज्ञानानंतरमहंब्रह्मेतिज्ञानमित्यर्थः॥ ।टिपणी॥दी॥पं॰॥सविशेषणेहिविधिनिषेधौविशेषणमुपसंक्रामतःसतिविशेष्य

यतः सर्वप्रमाणोपजीव्यस्य ज्येष्ठस्य प्रत्यक्षस्य बाध्यत्वाद्वेदेऽप्रमाणता· अत एवानुमानस्यापीत्याहातएवेति· आगमेन तत्त्वमस्यादिना बाधात् मेरुः पाषाणमयः पतन त्वाद्धिंध्यादिवदित्याद्यनुमानं यथा सर्वतः सौवर्णः कुलगिरिराजो मेरुरित्याद्यागमेन बाधितं तद्वदित्यर्थः। आगमविरोधोऽपि नास्तीत्याह· नापीति· भेदस्य प्रत्यक्षादिप्रमा णोऽज्ञातत्वाच्छास्त्रस्य बाधात् तज्ज्ञापकत्वाद्भेदवाद्यागमस्य तत्र तात्पर्याभावेनातत्परत्वात् तत्परो भेदवाद्यागमाद्दौर्बल्यादित्याह तत्परेति· न चार्थापत्तिविरोध इत्याह· न चेति औपाधिकविरुद्धधर्माश्रयत्वेनान्यथासिद्धत्वादित्याह· शीतस्यैवेति· नन्वग्निधर्मस्यौष्ण्यस्य जलादावारोपात्प्रतीतिरन्यकस्य धर्मस्येत्याशंक्याह· यदीति· अ

अत एव च नानुमानमपि प्रमाणं आगमबाधात् मेरुपाषाणमयत्वानुमानवत् नाप्यागमान्तरविरोधः तत्पराऽतत्परवाक्ययोः तत्परवाक्यस्य बलवत्त्वेन लोकसिद्धभेदानुवादिद्वासुपर्णादिवाक्यापेक्षया उपक्रमोपसंहाराद्यवगताद्वैततात्पर्यविशिष्टस्य तत्त्वमस्यादि वाक्यस्य प्रबलत्वात् न च जीवपरैक्ये विरुद्धधर्माश्रयत्वानुपपत्तिः शीतस्यैव जलस्यौपाधिकौष्ण्याश्रयत्ववत् स्वभावतो निर्गुणस्यैव जीव स्यान्तःकरणाद्युपाधिककर्तृत्वाद्याश्रयत्वप्रतिभासोपपत्तेः यदि च जलादौ औष्ण्यमारोपितं तदा प्रकृतेऽपि तुल्यम् न च सिद्धान्ते कर्तृत्वस्य क्व चिदप्यभावादारोप्यप्रमाहितसंस्काराभावे कथमारोप इति वाच्यम् लाघवेनारोप्यविषयसंस्कारत्वेनैव तस्य हेतुत्वात् न च प्राथमिका रोपे का गतिः कर्तृत्वाद्यध्यासप्रवाहस्यानादित्वात् तत्त्वंपदवाच्ययोर्विशिष्टयोरैक्यायोगेऽपि लक्ष्यस्वरूपयोरैक्यमुपपादितमेव अत एव तत्प्रतिपादकत्वमस्यादिवाक्यानामखण्डार्थत्वं सोऽयमित्यादिवाक्यवत्॥

54

न्तः॥ करणधर्मस्य कर्तृत्वादेर्भानसंभवात्प्रकृतेऽप्येतत्तुल्यमित्यर्थः· नन्वात्मता दात्म्यापन्नस्यैवान्तःकरणस्यापि कर्तृत्वादिधर्मकत्वात् तद्व्यतिरिक्ते आत्मनि कापि कर्तृत्वादेरप्रमितत्वात्कथमारोप इत्याशंक्य परिहरति· न चेति· यथा सूर्यादिकिरणसं पर्कात्प्रतीयमानमपि तलादिकं घटादिनिष्ठं न तु सूर्यादिनिष्ठं तथात्मसंबन्धात्प्रतीयमानमपि कर्तृत्वादिकमन्तःकरणनिष्ठमेव न त्वात्मनिष्ठं तस्य कूटस्थत्वात्ततः पृथक्का प्यप्रमितस्य कर्तृत्वादेरात्मन्यारोपे नास्ति बाधकम् तत्रारोप्यगोचरसंस्कारमात्रस्यैव हेतुत्वादित्याह· लाघवेनेति· नन्वस्त्वस्मिन्कर्तृत्वारोपे पूर्वप्रतीतकर्तृत्वादि

भूतस्तत्रापि तथाभूतस्तथापि प्राथमिकारोपो दुर्घट इत्याशंक्य परिहरति· नचेति· प्राथमिकारोपेऽपि तिर्नास्तीति न चेत्यर्थः· कर्तृत्वाद्यध्यासप्रवाहस्यानादित्वे न कस्याप्यारोपस्य प्राथम्यासिद्ध्या न तत्र पृथग्गतेर्वक्तव्यत्वादित्याह· कर्तृत्वेति· नन्वस्त्वेवं तथापि कथं विरुद्धधर्माक्रांतयोर्जीवेश्वरयोरैक्यमित्याशंक्याह· तत्त्वमिति· यतो लक्षणया स्वरूपैक्यमत एव सोऽयं देवदत्तः प्रकृष्टप्रकाशश्चंद्र इत्यादिवाक्यवत्· तत्त्वमसि सत्यं ज्ञानमनंतमित्यादिवाक्यानामखंडार्थत्वमिति· न चास्त्यानुपलब्धिविरोधस्तमसाच्छन्नस्य घटस्यानुपलब्धेस्तदभावानिश्चायकत्ववदज्ञानवतोऽभेदस्यानुपलंभस्य तदभावानिर्णायकत्वादिति सपि द्रष्टव्यम्· ननु सिद्धप्रयोजकप्रवृत्त्यादेरभावात्संगतिग्राहायोक्रियान्वितस्वार्थपराणामेव प्रामाण्यान्न सिद्धब्रह्मवेदांतप्रमेयमिति· प्रभाकरमतमाशंक्य परिहरति· नचेति· पुत्रपदांकितवसनं चैत्रगुः

नच कार्यपराणामेव प्रामाण्यं चैत्र पुत्रस्ते जात इत्यादौ सिद्धेऽपि संगतिग्राहात्॰॥ एवं सर्वप्रमाणाविरुद्धं श्रुतिस्मृतीति ॥ ॥
हासपुराणप्रतिपाद्यं जीवपरैक्यं वेदांतशास्त्रस्य विषय इति सिद्धम्॰॥ इति श्रीवेदांतपरिभाषायां विषयपरिच्छेदः॥ ॥

रतो निधाय हे चैत्र पुत्रस्ते जात इत्युक्ते विकसितवदनकमलं चैत्रमवलोक्यास्य पुत्रपदस्य सुतरूपेऽर्थे संगतिं तटस्थो गृह्णातीति पुत्रस्ते जातः कन्या ते गर्भिणी इत्यादौ संगतिग्राहादित्यर्थः॥ उपसंहरति· एवमिति· उक्तप्रकारेण सर्वैः प्रत्यक्षादिप्रमाणैरविरुद्धं तत्र को मोहः कः शोक एकत्वमनुपश्यत इत्यादिश्रुतिभिः क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारतेत्यादिस्मृतिभिः सर्वभूतांतरस्थाय नित्यशुद्धचिदात्मने प्रत्यक्चैतन्यरूपाय मह्यमेव नमो नमः इत्यादीतिहासैः विभेदजनकेऽज्ञाने नाशनात्यंतिकं गते· आत्मनो ब्रह्मणो भेदमसंतं कः करिष्यतीत्यादिपुराणैश्च तात्पर्यतया प्रतिपाद्यम्॰॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसुतधनपतिसूरिसूरिसुतशिवदत्तविरचितायां परिभाषार्थदीपिकायां विषयपरिच्छेदः समाप्तः संपूर्णम्॥ शु

श्रीगणेशाय नमः ॥ अथ प्रयोजननिरूपणं प्रतिजानीते इदानीमिति यज्ज्ञातं सन्ममेदं स्यादिति संबंधितयेष्यते तत्प्रयोजनं तद्विभजति तच्चेति तत्र तयोर्द्वयोर्म
ध्ये तदन्यतरसाधनं तयोः सुखदुःखाभावयोरन्यतरस्य सुखस्य दुःखाभावस्य वा साधनं सुखादिरूपप्रयोजनं गुणत्वाद्गौणं सुखस्यापि द्वैविध्यमाह सुखं चेति उपल
क्षणमेतत् दुःखाभावोपि द्विविधः यत्किंचिद्दुःखाभावो यावद्दुःखाभावश्चेति तत्र संसारदशायामाद्यो मोक्षावस्थायां द्वितीय इत्यपि बोध्यं विषयेति विषयतारतम्याद्वि
षयेन्द्रियसन्निकर्षजनितांतःकरणवृत्तितारतम्यं तत्कृतानंदलेशाविर्भावविशेषस्तथाभूतवृत्त्या विषयावच्छिन्नात्मज्ञाननिवृत्तौ तदवच्छिन्नानंदस्यैव प्रतिबिंबनाद्वा ॥
नंदसमुद्रस्य ब्रह्मण आनंदलेशाविर्भावविशेष इत्यर्थः ॥ अत्र श्रुतिं प्रमाणयति ॥ एतस्यैवेति आदिपदेन एष ह्येवानंदयातीत्याद्या श्रुतिरूपादेया द्वितीयं सुखं त्व

इदानीं प्रयोजनं निरूप्यते ॥ यदवगतं सत्स्ववृत्तितयेष्यते तत्प्रयोजनं तच्च द्विविधं मुख्यं गौणं चेति तत्र सुखदुःखाभावौ मुख्यं प्रयोजन
म् तदन्यतरसाधनं गौणं प्रयोजनं सुखं च द्विविधं सातिशयं निरतिशयं चेति तत्र सातिशयं सुखं विषयानुषंगजनितांतःकरणवृत्ति
तारतम्यकृतानंदलेशाविशेषः ॥ एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंतीत्यादिश्रुतेः ॥ निरतिशयं सुखं च ब्रह्मैव ॥ आनंदो
ब्रह्मेति व्यजानात् इति श्रुतिः ॥ आनंदात्मकब्रह्मावाप्तिश्च मोक्षः शोकनिवृत्तिश्च ० ब्रह्मवेद ब्रह्मैव भवतीति तरति शो
कमात्मविदित्यादिश्रुतेः ॥ न तु लोकांतरावाप्तिः तज्जन्यवैषयिकानंदो वा मोक्षः तस्य कृतकत्वेनानित्यत्वे मुक्तस्य पुनरावृत्त्या ॥

55 क्षयति ॥ निरतिशयसुखमिति चकारात्सातिशयसुखमप्यात्मब्रह्मलेशात्मकत्वात् ब्रह्मैवेत्यर्थः ॥ अत्रापि श्रुतिं प्रमाणयति ० आनंद इति ॥ भवत्वानं
दात्मकब्रह्मप्रकृते ॥ किमायातमित्याशंक्याऽऽनंदरूपब्रह्मावाप्तिः समूलसर्वानर्थनिवृत्तिश्च मोक्ष इत्यवगतो मोक्षः सममभूयादिति स्ववृत्तितयेष्यते इति तस्य
प्रयोजनत्वमित्याह आनंदेति शोकशब्दः सकारणबंधपरः उभयत्र प्रमाणमाह ब्रह्मवेदेति ॥ तरति अपनयति आदिपदेन ब्रह्मविदाप्नोति परं तरत्यविद्यामित्या ॥
द्या श्रुतिरादेया तांत्रिकमतनिरासायाह ॥ न त्विति तस्याः स्वतः पुरुषार्थत्वाभावादाह ॥ तज्जन्येति तयलोकांतरावाप्त्याजन्येत्यर्थः ॥ उभयमोक्षत्वाभावे हेतुमाह ॥ त

टी० उ० सविवरणस्य ॥

ननु त्वदभिमतो मोक्षः सादिरनादिर्वा· आद्ये कृतकत्वेनानित्यत्वे मुक्तस्य पुनरावृत्तिलक्षणो दोषस्तुल्यः द्वितीये श्रवणादिवैयर्थ्यमिति तांत्रिकः शंकते· नन्विति· द्वितीय
पक्षमवलंब्य परिहरति· नेति· नन्वानंदरूपस्य ब्रह्मणः सिद्धत्वेन तत्प्राप्तेस्तथात्वेप्यनर्थनिवृत्तेरभावरूपायाः कथं सिद्धत्वमित्याशंक्याहानर्थनिवृत्तिरपीति॰ ननु सिद्धस्य
पुरुषार्थत्वादर्शनादेवंविधस्य मोक्षस्य पुरुषार्थता न भविष्यतीत्याशंक्याह· लोकेपीति· कृत्यपेक्षायामुदाहरति· यथेति दृष्टांतोक्तं प्रकृते योजयति· एवमिति· स च मो
क्षः किं कर्मसाध्यः किं वोपासनासाध्य आहोस्विदेतत्समुच्चयसाध्य उत कर्मज्ञानसमुच्चयसाध्यः किं वोपासनाज्ञानसमुच्चयसाध्यः किं वा केवलज्ञानलभ्य इति

ननु त्वन्मते प्यानंदावाप्तेरनर्थनिवृत्तेश्च सादित्वे तुल्यो दोषः अनादित्वे मोक्षमुद्दिश्य श्रवणादौ प्रवृत्त्यनुपपत्तिरिति चे
न्न· सिद्धस्यैव ब्रह्मस्वरूपस्य मोक्षस्यासिद्धत्वभ्रमेण तत्साधने प्रवृत्त्युपपत्तेः अनर्थनिवृत्तिरप्यधिष्ठानभूतब्रह्मस्वरू
पतया सिद्धैव लोकेपि प्राप्तप्राप्तिपरिहृतपरिहारयोः प्रयोजनत्वं दृष्टमेव· यथा हस्तगतविस्मृतसुवर्णादौ तव हस्ते सुवर्णमि
त्याप्तोपदेशादप्राप्तमिव प्राप्नोति· यथा वा वलयितचरणायां रज्जौ सर्पत्वभ्रमवतो नायं सर्प इत्याप्तवाक्यात् परिहृतस्यै
व सर्पस्य परिहारः एवं प्राप्तस्याप्यानंदस्य प्राप्तिः परिहृतस्याप्यनर्थस्य निवृत्तिः मोक्षः प्रयोजनं स च ज्ञानैकसाध्यः तमेव विदि
त्वाति मृत्युमेति नान्यः पंथा विद्यतेऽयनायेति श्रुतेः। अज्ञाननिवृत्तेर्ज्ञानैकसाध्यत्वनियमाच्च तच्च ज्ञानं ब्रह्मात्मैक्यगोचरम्॥

विचिकित्सायां स च ब्रह्मज्ञानादिति प्रतिज्ञातमुपपादयति· स चेति· तमेवात्मानमेव विदित्वा तं विदित्वैवेति वा॰ मृत्युं जन्ममरणलक्षणां संसृतिमत्येति· अतिक्रा
मति· अन्यः कर्मादिरूपोऽयनाय मोक्षाय पंथा मार्गो न विद्यते· हिरण्यदा अमृतत्वं भजंत इत्यादिश्रुतेः कर्मसाध्यस्वर्गफलस्य प्रलयपर्यंतस्थायित्वाभिप्रायत्वादितरवाक्या
नामपि परंपरया कर्मादेर्मोक्षसाधनत्वाभिप्रायत्वाच्चेति भावः युक्तिमप्याहाज्ञाननिवृत्तेरिति ननु तज्ज्ञानं भेदविषयं तत्साधनं किं वाभेदगोचरमिति विचिकित्सायामाह· तच्चे
॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ति॥ तत्र श्रुतिं प्रमाणयति· अभयमिति· स्मृतिं प्रमाणयति तत्त्वमस्यादीति ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ब्रह्मात्मैक्यगोचरमपि तज्ज्ञानं परोक्षमपरोक्षं वेति विचिकित्सायामाह· तच्चेति तज्ज्ञानं किं वाक्यादुत्पद्यत उतान्तःकरणादिति संशये पद्मपादाचार्यगदितमाह· तच्चेति वाचस्पतिमिश्रमतमाह· मननेति· ननु कथं वाक्यादपरोक्षज्ञानमित्याशंक्याह· तत्रेति उपपादितं प्रत्यक्षपरिच्छेदेऽस्माभिरिति शेषस्तथा च ज्ञानापरोक्षत्वस्य प्रमेयविशेषनिबंधनत्वे सति सन्निकृष्टविषयं शब्दजन्यमपि ज्ञानमपरोक्षमेवेत्युक्तं जीवगोचरज्ञानवत्तदभिन्नब्रह्मविषयमपि तदपरोक्षमेवात्र प्रमाणाकांक्षायां शास्त्रदृष्ट्यात् पदेशो वामदेववदिति सूत्रस्थं भाष्यं प्रमाणमित्याशयेनाह तत एवेति· शब्दजन्यज्ञानस्यापरोक्षत्वादेव प्रतर्दनाधिकरणे प्राणस्तथानुगमादित्यूस्मिन्प्राणोस्मीत्यादिषु विषयवाक्यं तस्मिन् तत्र विषयसंशयपूर्वपक्षसमाधानफलाख्यपंचांगन्यायस्याधिकरणेति संज्ञा प्रदर्शनो वैदे वोदासिरिंद्रस्य प्रियं धामापजगाम युद्धे

अभयं वै जनक प्राप्तोसि। तदात्मानमेवावेदहं ब्रह्मास्मीति श्रुतेः। तत्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनमिति· नारदीयवचनाच्च॰ तच्च ज्ञानमपरोक्षरूपं परोक्षत्वेऽपरोक्षभ्रमनिवर्तकत्वानुपपत्तेः। तच्चापरोक्षज्ञानं तत्वमस्यादिवाक्यादिति केचित्· मननिदिध्यासनसंस्कृतांतःकरणादेवेत्यपरे· तत्र पूर्वाचार्याणामयमाशयः संविदापरोक्ष्यं न करणविशेषोत्पत्तिनिबंधनम्॰ किंतु प्रमेयविशेषनिबंधनमित्युपपादितम्॰॥ तथा च ब्रह्मणः प्रमातृजीवाभिन्नतया तज्ज्ञोचरं शब्दजन्यज्ञानमप्यपरोक्षं अत एव प्रतर्दनाधिकरणे प्रर्दनं प्रति प्राणोस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्स्वेतीन्द्रप्रोक्तवाक्ये प्राणशब्दस्य ब्रह्मपरत्वे निश्चिते मतिमामुपास्स्वेत्येस्मच्छब्दानुपपत्तिमाशंक्य तदुत्तरत्वेन प्रवृत्ते शास्त्रदृष्ट्यात् पदेशो वामदेववदित्यत्र सूत्रे शास्त्रीया दृष्टिः शास्त्रदृष्टिरिति तत्वमस्यावाक्यजन्यमहं ब्रह्मेति ज्ञानं दृष्टिशब्देनोक्तमिति॥ न च पौरुषेण चेत्यस्यां कौषीतकिब्राह्मणोपनिषदाम्नाताख्यायिकायां प्राणोस्मीत्यादिश्रूयमाणं वाक्यं विषयस्तत्र प्राणशब्देन किं वायुरभिप्रेतः किं वा इन्द्रिः उत जीव आहोस्वित्परमात्मेति संशयः॥ वाय्वादिरभिप्रेत इति पूर्वपक्षः परमात्मेति सिद्धांतः वाय्वाद्युपासनं पूर्वपक्षे फलं परमात्मोपासनमुत्तरपक्षे प्राणः परमात्मा तथानुगमात्पौर्वापर्यालोचनया वाक्यस्य तत्परत्वावगमादिति· प्राणशब्दस्य ब्रह्मपरत्वे निश्चिते सति मामित्यस्मच्छब्दानुपपत्तिमाशंक्य तदुत्तरत्वेन प्रवृत्ते यथा शास्त्रदृष्ट्याहं सूर्योभवमहं मनुरिति· वामदेवस्य गर्भस्थस्य मुनेरुक्तिस्तथा शास्त्रदृष्ट्यामामितींद्रोपदेशोपीत्यर्थकसूत्रेऽस्यर्थः अथाचार्यवाचस्पतिमिश्राणामाशयमाविष्करोति· अन्येषामिति सूक्ष्मवस्तुनिर्वर्णादौ इन्द्रियजन्यत्वस्य इन्द्रियत्वेनेन्द्रियजन्यत्वस्यानुमितिज्ञानस्य म

86

त्वान्नतत्रातिव्याप्तिः॥ अस्मिन्पक्षे इन्द्रियेभ्यः परा ह्यर्था इति श्रुताविन्द्रियेभ्यः इत्यस्य बाह्येन्द्रियेभ्य इत्यर्थः मनः सर्वेन्द्रियाणि चेति श्रुतावपि सर्वाणि बाह्येन्द्रियाणीत्यर्थः साक्षात्कारस्येन्द्रियजन्यत्वे ब्रह्मसाक्षात्कारेऽपि मन एव करणमित्याह॥ ब्रह्मेति॥ सर्वेदा तदापत्तिमाशंक्याह· मननेति· तत्र प्रमाणमाह· मनसैवेति· दृश्यते त्वग्र्यया बुद्ध्येत्याद्याश्रुतिरादिपदार्थः ननु यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेतीत्यादिश्रुतेः कागतिरित्याशंक्याह मन इति· ननु तं त्वौपनिषदं पुरुषं पृच्छामीति श्रुतिबोधितमुपनिषन्मात्रगम्यत्वम् विरुद्धमित्याशंक्य परिहरति·॥ न चेति· किं तदनुपजीव्यमानान्तरगम्यत्वे तदनुपपत्तिरुत तदुपजीव्यमानान्तरगम्यत्वेनाद्यः इष्टापत्तेः। न द्वितीयः अपूर्वस्य तदुपजीव्यानुमानार्थापत्तिगम्यत्वेऽपि वेदगम्यत्वाभ्युपगमादित्याशयेनाह॥ स्मादिति मनननिदिध्यासनसहकृतस्य मनसः अस्मिन्पक्षे शास्त्रदृ

अन्येषां त्वयमाशयः करणविशेषनिबन्धनमेव ज्ञानानां प्रत्यक्षत्वम् न विषयविशेषनिबन्धनं एकस्मिन्नेव सूक्ष्मवस्तुनि पटुकरणापटुकरणयोः प्रत्यक्षत्वाप्रत्यक्षत्वव्यवहारदर्शनात्। तथा च संवित्साक्षात्त्वे इन्द्रियजन्यत्वस्यैव प्रयोजकतया न शब्दजन्यज्ञानस्यापरोक्षत्वं· ब्रह्मसाक्षात्कारेऽपि मनननिदिध्यासनसंस्कृतं मन एव करणं मनसैवानुद्रष्टव्यमित्यादिश्रुतेः॥ मनगम्यत्वश्रुतिश्चासंस्कृतमनोविषया न चैवम् ब्रह्मण औपनिषदत्वानुपपत्तिः॥ अस्मदुक्तमनसो वेदजन्यज्ञानानन्तरमेव प्रवृत्ततया वेदोपजीवित्वात्· वेदानुपजीविमानान्तरगम्यत्वस्यैव वेदगम्यत्वविरोधित्वात्॥ शास्त्रदृष्टिसूत्रमपि ब्रह्मविषयमानसप्रत्यक्षस्य शास्त्रप्रयोजकत्वादुपपद्यते॥ तदुक्तम् अपि संराधने सूत्राच्छास्त्रार्थध्यानजा प्रमा शास्त्रदृष्टिर्मता तां तु वेत्ति वाचस्पतिः परः इति· तच्च·॥ ॥

ष्टिसूत्रविरोधं परिहरति· शास्त्रेति तथा च तत्र शास्त्रदृष्टिपदेन मानसप्रत्यक्षमेव तत्प्रयोज्यत्वादुच्यत इत्यर्थः॥ वाचस्पतिमिश्राणामिदं मतमित्यत्र कल्पतरुकारसम्मतिमाह तदुक्तमिति· शास्त्रार्थध्यानजा प्रमा शास्त्रदृष्ट्यात्तूपदेशो वामदेववदिति सूत्रे शास्त्रदृष्टिशब्देनाभिमता तां तथाभूतां शास्त्रदृष्टिं वाचस्पतिर्जानाति यतः परः सर्वोत्कृष्टः तथाभूतप्रमैव शास्त्रदृष्टिरित्यत्र को हेतुरित्याशंक्योक्तमपीति· अपि संराधने प्रत्यक्षानुमानाभ्यामिति सूत्रात्· अपि चैनमात्मानं निरस्तसमस्तप्रपंचमित्युक्तम् संराधनस्य भक्तिध्यानप्रणिधानाद्यनुष्ठनस्य काले योगिनः पश्यन्ति· तत्र हेतुः॥ प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यां तथा च श्रुतिः॥ ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमान इत्याद्या स्मृतिश्च यं विनिद्रा जितश्वासाः संतुष्टाः संयतेन्द्रियाः ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नम इत्याद्या तां दृशज्ञानस्य

सचपापक्षयः॥इत्येवंपरंपरयातत्त्वज्ञानेकर्मणांविनियोगः॥अतएवपरंपरयाविनियोगादेवतंपूर्वोक्तमेतमनंतरोक्तंपरमात्मानंब्राह्मणावेदानुवचनादिभि
वैदितुमिच्छंतिवेदानुवचनंवेदाध्ययनं·अनाशकमनाशनंहितमितमेध्याशनं·तत्रप्रत्यगर्थतयाप्रधानभूतायामुत्कटेच्छायांवेदानुवचनादीनांसाधनतेतिवाच
स्पतिमिश्राः·अश्वेनजिगमीषतीत्यादाविवधात्वर्थस्यवेदनस्यैवप्राधान्यमाश्रित्यज्ञानेतेषांसाधनत्वमितिविवरणाचार्य्याः·यस्यैतेचत्वारिंशत्संस्काराइत्या
ज्ञानंपापक्षयात्सचकर्मानुष्ठानादितिपरंपरयाकर्मणांविनियोगः।अतएवतमेतंवेदानुवचनेनब्राह्मणाविविदिषंतियज्ञेनदानेन
तपसाऽनाशकेनेत्यादिश्रुतेः·कषायेकर्मभिःपक्वेततोज्ञानंप्रवर्ततइत्यादिस्मृतिश्चसंगच्छते·एवंश्रवणमनननिदिध्यासनान्यपिज्ञा
नसाधनानिमैत्रेयीब्राह्मणेआत्मावाअरेद्रष्टव्यइतिदर्शनमनूद्यतत्साधनत्वेनश्रोतव्योमंतव्योनिदिध्यासितव्यइतिश्रवणमनननिदि
ध्यासनानांविधानात्·तत्रश्रवणंनामवेदांतानामद्वितीयेब्रह्मणितात्पर्यावधारणानुकूलमानसीक्रियामननंनामशब्दावधारितेऽर्थे
मानांतरविरोधशंकायांतन्निराकरणानुकूलतर्कात्मज्ञानजनकोमानसोव्यापारः·निदिध्यासनंनामअनादिदुर्वासनयाविषयेष्वाकृष्य॥
माणचित्तस्यविषयेभ्योऽपकृष्यात्मविषयकस्थैर्यानुकूलोमानसोव्यापारः।तत्रनिदिध्यासनंब्रह्मसाक्षात्कारेसाक्षात्कारणंतेध्या
57 नयोगानुगताअपश्यन्·देवात्मशक्तिंस्वगुणैर्निगूढामित्यादिश्रुतेः॥निदिध्यासनेचमननंहेतुः·अकृतमननस्यार्थदार्ढ्याभा
वेनतद्विषयेनिदिध्यासनायोगात्·मननेचश्रवणंहेतुः·श्रवणाभावेतात्पर्यानिश्चयेनशाब्दज्ञानाभावेनश्रुतार्थविषयकयुक्त
त्वायुक्तत्वनिश्चयानुकूलमननायोगात्·दिश्रुतिः·तपसाकल्मषंहंतीत्याद्यास्मृतिश्चादिपदादेयाः·यथाकर्मणांतत्त्वज्ञानेविनियोगस्तथाश्रवणादीनाम
पीत्याहैवमिति·तत्रबृहदारण्यकश्रुतिंप्रमाणयति·मैत्रेयीब्राह्मणइति·याज्ञवल्क्यस्यस्वभार्ययामैत्रेय्यासंवादस्प्रकरणेतत्रश्रवणादिकंलक्षयति·।तत्रेति·तत्रा
किंत्रयाणामपिसाक्षात्कारसाधनत्वमुतान्यतमस्यतत्रापिकस्येत्याकांक्षायामाह·तत्रेति·ततस्तुतंपश्यतिनिष्कलंध्यायमानइत्याद्याश्रुतिरादिपदोपादेया॥॥

निदिध्यासनस्यमननायतत्वात्तस्यचश्रवणाधीनत्वात्त्रीण्यपिसाक्षात्परंपरयाचज्ञानोत्पत्तिसाधनानीत्याचार्यवाचस्पतिमिश्रमतमुपसंहरति· एतानीति· अपरे
विवरणाचार्यास्तुपराचीनयोरनन्तरभाविनोः आरात्सामीप्यात् नत्वंगत्वमपिकिंतार्तीयशेषत्वरूपमुतमृत्पिंडादिकार्यघटादौचक्रादीनामिवसहकारिकारणत्व

एतानित्रीण्यपिज्ञानोत्पत्तौकारणानीति केचिदाचार्याऊचिरे· अपरेतुश्रवणंप्रधानंमनननिदिध्यासनयोस्तुश्रवणात्पराचीनयोरपि॥
श्रवणफलब्रह्मदर्शननिर्वर्तकतयाआरादुपकारकांगत्वमित्याहुः तदप्यंगत्वंनतार्तीयशेषत्वरूपं तस्यश्रुत्याद्यन्यतमप्रमा
णगम्यस्यप्रकृतेश्रुत्याद्यन्यतमाभावेऽसंभवात् तथाहि· व्रीहिभिर्यजेत दध्नाजुहोतीत्यादाविवमनननिदिध्यासनयोरंगत्वेनकाचि
त्तृतीयाश्रुतिरस्तिनापिबर्हिर्देवसदनंदामीत्यादिमंत्राणांबर्हिःखंडनप्रकाशनसामर्थ्यवत् किंचिल्लिंगमस्तिनापिप्रदेशांतरपठितप्र
वर्ग्यस्याग्निष्टोमेप्रवृणक्तीतिवाक्यवच्छ्रवणानुवादेनमनननिदिध्यासनयोः विनियोजकंकिंचिद्वाक्यमस्तिनापिदर्शपूर्णमासाभ्यां
स्वर्गकामोयजेतेतिवक्यावगतफलसाधनताकदर्शपूर्णमासप्रकरणेप्रयाजादीनामिवफलसाधनत्वेनावगतस्यश्रवणस्यप्रकरणे
मनननिदिध्यासनयोराम्नातंननुद्रष्टव्यइतिदर्शनानुवादेनश्रवणेविहितेसतिफलवतयाश्रवणप्रकरणेतत्संनिधावाम्नातयोर्मनननि
दिध्यासनयोःप्रयाजन्यायेनप्रकरणादेवांगतेति चेन्न तेध्यानयोगानुगताअपश्यन्नित्यादिश्रुत्यंतरेध्यानस्यदर्शनसाधन-
त्वेनावगतस्यांगाकांक्षयाप्रयाजन्यायेनश्रवणमननयोरेवांगतापत्तेः क्रमसमाख्येचदूरनिरस्तेकिंच०

रूपमित्याशंक्यद्वितीयमा१
अपितुमाद्यंनिराकरोति· तदप्यंगत्वमिति· तार्तीयंतृतीया ध्यायस्थंश्रुत्याद्यभावंस्फुटयति· तथाहीति· प्रकरणाभावोनास्तीतिशंकते· नन्विति· अविशेषे राम
णसाधनतयाश्रूयमाणेषुश्रवणादिषुकिंप्रधानंसाधनमित्याकांक्षायांश्रुत्यंतरबलान्निदिध्यासनस्यैवप्रधानत्वापत्त्याश्रवणस्यप्रकरणित्वासिद्धिरित्याह· तइति· ५७

नन्वस्यां श्रुतावात्मदर्शनानंतरं विधीयमानं श्रवणमेव प्रकरणिश्रुत्यंतरस्थेन तदनुसारिव्याख्यानसंभवादित्याशंक्याह॰ किंचेति॰ विकृतिषु सौर्यादिषु॰ ननु मनननिदिध्या
सनयोः स्तात्तीयशेषत्वेन किंतु श्रवणसहकारित्वमितीदमेव विवरणाचार्याभिमतमिति कथं तत्तातमित्यत आह॰ सूचितं चेति॰ क्लृप्तोपेक्षायामाद्यवर्णकस्थमुक्त
ह्यकं पठति॰ शक्तीत्यादि॰ अंगीक्रियेतइत्यंतं श्रवणादीकस्याधिकारइत्यपेक्षायामाह॰ श्रवणादिष्विति॰ मोक्षरूपफलकामनया क्रियमाणश्रवणादिकमपि
प्रयाजादावंगत्वविचारः सप्रयोजनः पूर्वपक्षे विकृतिषु नप्रयाजाद्यनुष्ठानं सिद्धांते तु तत्रापि तदनुष्ठानमिति प्रकृते तु श्रवणं न कस्यचित्प्र
कृतिः येन मनननिदिध्यासनयोस्तत्राप्यनुष्ठानमंगत्वविचारफलं भवेत् तस्मान्नतार्तीयशेषत्वं मनननिदिध्यासनयोः किंतु यथा घटादि
कार्ये मृत्पिंडादीनां प्रधानकारणता चक्रादीनां सहकारिकारणतेति प्राधान्याप्राधान्यव्यपदेशः तथा श्रवणमनननिदिध्यासनानामपीति
मंतव्यं सूचितं चैतद्विवरणाचार्यैः शक्तितात्पर्यविशिष्टशब्दावधारणं प्रमेयावगमं प्रत्यव्यवधानेन कारणं भवति प्रमाणस्य प्रमेयावगमं प्रत्य
व्यवधानात् मनननिदिध्यासने तु चित्तस्य प्रत्यगात्मप्रवणता संस्कारपरिनिष्पन्नतदेकाग्रवृत्तिकार्यद्वारेण ब्रह्मानुभवहेतुतां
प्रतिपद्येतइति फलम् प्रत्यव्यवहितकरणस्य विशिष्टशब्दावधारणस्य व्यवहिते मनननिदिध्यासने तदंगे अंगीक्रियेते इति॰ श्रवणा
दिषु च मुमुक्षूणामधिकारः॥ काम्ये कर्मणि फलकामस्याधिकारित्वात् मुमुक्षायां च नित्यानित्यवस्तुविवेकस्येहामुत्रार्थफलभोगे
विरागस्य शमदमोपरतितितिक्षासमाधानश्रद्धानां च विनियोगः॥ अंतरिंद्रियनिग्रहः शमः बहिरिंद्रियनिग्रहो दमः विक्षेपाभाव उप
रतिः शीतोष्णादिद्वंद्वसहनं तितिक्षा चित्तैकाग्र्यं समाधानं गुरुवेदान्तवाक्ये विश्वासः श्रद्धा १०॥ काम्यमिति भावः नित्यानित्ययोरात्मानात्मनोर्व
स्तुनोर्विवेकस्य नित्यानित्ययोर्वस्तीति नित्यानित्यवस्तुतयोर्नित्यत्वानित्यत्वधर्मयोर्वा विवेकस्य शमादींल्लक्षयति॰ अंतरिति॰ श्रवणादिव्यतिरिक्ताधिकारानुप
युक्तविषयेभ्यो मनसो निग्रहः शमस्तादृशविषयेभ्यो बहिरिंद्रियाणां श्रोत्रादीनां निग्रहो दमः गृहस्थादीनां श्रवणादावनधिकारं मन्यमानानां केषांचित्तन्न्यासिनां स

टिपन्-परापोंतरादित्येहिरण्मयः पुरुषोदृश्यते-इत्यादिवाक्ये परापोंतरादित्येपरं षोतरक्षिणीतिचश्रूयमाणःपरमेश्वरएवनसंसारीकुतस्तदृ ॥ःः॥ः॥
र्मोपदेशात् ॥तस्यपरमेश्वरस्यये धर्मास्सर्वपाप्माविइत्यादिरूपास्तेषामस्मिन्वाक्येउपदेशादित्यर्थः ॥ःः॥टीका॥पं-२॥कीं॰॥

वे॰प॰ शमादिश्चित्यर्थः॥वाचस्पतिमिश्रमतमाहापरेत्विति-ननुसगुणोपासनायाअपिमुक्तिफलदात्तत्वश्रवणाच्छ्रवणादिसमासादिततत्वज्ञानमेवमोक्षसाधनमितिकथमित्या
टी॰टी॰ शंक्याह-सगुणेति-निदिध्यासनात्मकचित्तैकाग्र्यद्वारातत्रांतस्तद्धर्मोपदेशादितिसूत्रस्यकल्पतरुवचनमुदाहरति-तदुक्तमिति-येमंदाअकृतसगुणोपासनत्वाद्ववशीकृत
५८ चिताः ननुयेषांसगुणोपासकानामत्रश्रवणाद्यभावात्साक्षात्कारेणजातस्तेषांकागतिरित्याशंक्याह॰॥सगुणेति॥आदिपदसंग्रहादिलग्राहकंअर्चिरादिअभिमानि

अत्रोपरमशब्देनसंन्यासोऽभिधीयते॰तथाचसंन्यासिनामेवश्रवणाधिकारइतिकेचित्-अपरेतुउपरमशब्दस्यसंन्यासवाचकत्वाभावाद्वि
क्षेपाभावमात्रस्यगृहस्थेष्वपिसंभवात्॰जनकादेरपिब्रह्मविचारस्यश्रूयमाणत्वात्सर्वाश्रमसाधारणंश्रवणादिविधानमित्याहुः-सगुणोपासन
मपिचित्तैकाग्र्यद्वारानिर्विशेषब्रह्मसाक्षात्कारेहेतुः-तदुक्तम्-निर्विशेषंपरंब्रह्मसाक्षात्कर्तुमनीश्वराः।येमंदास्तेऽनुकंप्यंतेसविशेषनिरूपणैः
वशीकृतेमनस्येषांसगुणब्रह्मशीलनात्-तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनमिति॥सगुणोपासकानांचार्चिरादिमार्गेणब्रह्मलोकगतानां
तत्रैवश्रवणाद्युत्पन्नतत्वसाक्षात्काराणांब्रह्मणासहमोक्षः॥कर्मिणांतुधूमादिमार्गेणपितृलोकगतानामुपभोगेनकर्मक्षयसतिपूर्वकृतसु
कृतदुःकृतानुसारेणब्रह्मादिस्थावरांतेषुपुनरुत्पत्तिः।तथाचश्रुतिः।रमणीयचरणारमणीयांयोनिमापद्यंते-कपूयचरणाःकपूयांयो
निमापद्यन्ते-इतिप्रतिषिद्धानुष्ठायिनांतु-रौरवादिनरकविशेषेषु-तत्तत्पापोपचितंतीव्रदुःखमनुभूयश्वशूकरादितिर्यग्योनिषु-स्थावा
रादिषुचोत्पत्तिरिति-अलमतिप्रसंगेन-निर्गुणब्रह्मसाक्षात्कारवतस्तुनलोकांतरगमनंनतस्यप्राणाउत्क्रामंतीतिश्रुतेः-किंतुयावत्प्रार॥
ब्धकर्मक्षयंसुखदुःखेअनुभूयपश्चाद्ब्रह्मज्यते॰॥देवतोपर्याकरुह्ययेनमार्गेणगम्यतेतेनैवमग्रेपीत्यर्थःकर्मिणांतुनैवमित्याह-कर्मिणामिति-आदि
पदेनराज्यादिसंग्रहः-ब्रह्मादि-ब्राह्मणादिरमणीयंचरणमाचरणंयेषांतेतेथासुकृतकर्माणोरमणीयांयोनिमापद्यंते-ब्राह्मणयोनिवाक्षत्रिययोनिंवावैश्ययोनिवा राम
५८

कुपूयां योनिमापद्यंते· श्वयोनिं वा चांडालयोनिं वा शूद्रयोनिं वेति तर्हि ज्ञानमप्युत्तरक्षणे तस्य विदेहकैवल्यं स्यादित्याशंकते· किं त्विति· अपवृज्यते मुच्यते· ॥ ❀ ॥
प्रारब्धकर्मावस्थानश्रुतिस्मृतिविरुद्धमिति शंकते नन्विति· आदिपदं तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयते एवं हास्य सर्वे पाप्मानः प्रदूयंते इत्यादिश्रुतिसंग्राहकं इत
रश्रुतिस्मृत्यनुरोधात् प्रारब्धातिरिक्तकर्मणां नाश इत्याह नस्येति यावन्न विमोक्ष्ये प्रारब्धकर्मणो न विमोक्ष्यते· अथ प्रारब्धकर्म विमुञ्चन्ननंतरं संपत्स्ये संपत्स्यते वि
मुक्तश्च विमुच्यते॰ अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभमित्याद्याः श्रुतिस्मृतय आदिपदादेयाः नन्वे...वं हास्य सर्वे पाप्मानः प्रदूयंत इत्यादिश्रुत्यनुसारेण संचि

ननु क्षीयंते चास्य कर्माणि तस्मिन् दृष्टे परावरे इत्या दिश्रुत्या ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथेत्यादिस्मृत्या च· ज्ञानस्य सक ॥
लकर्मक्षयहेतुत्वनिश्चये सति प्रारब्धकर्मावस्थानमनुपपन्नमिति चेन्न· तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये इत्यादिश्रुत्या ६३
नाभुक्तं क्षीयते कर्मेत्यादिस्मृत्या चोत्पादितकार्यकर्मव्यतिरिक्तानां संचितकर्मणामेव ज्ञानविनाशित्वावगमात्· संचितं हि विधमुक्त
तं दुःकृतं चेति· तथा च श्रुतिः तस्य पुत्रा दायमुपयंति सुहृदः साधुकृत्यां द्विषंतः पापकृत्यामिति· ननु ब्रह्मज्ञानान्मूलाज्ञाननिवृत्तौ तत्का।
र्यप्रारब्धकर्मणोऽपि निवृत्तिः कथं ज्ञानिनो देहधारणमुपपद्यते इति चेन्न· अप्रतिबद्धज्ञानस्यैवाज्ञाननिवर्तकतया प्रारब्धकर्मरूपप्र
तिबंधकदशायामज्ञाननिवृत्तेरनंगीकारात्· नन्वेवमपि तत्त्वज्ञानादेकस्य मुक्तौ सर्वमुक्तिः स्यात्· अविद्याया एकत्वेन तन्निवृत्तौ
क्वचिदपि संसारयोगादिति चेन्न· ॥ इष्टापत्तेरित्येके अपरे त्वेतद्दोषपरिहाराय इंद्रो मायाभिरिति बहुवचनश्रुत्यनुगृहीतमविद्याना
नात्वमंगीकर्तव्यमित्याहुः ॥ अन्ये त्वेकैवाविद्या तस्या एवाविद्याया जीवभेदेन ब्रह्मस्वरूपावरणशक्तयो नाना तथा च॰ ॥ ❀ ॥

तानामपि पापकर्मणामेवानाश इति भ्रमव्युदासायाह· संचितमिति· दायं धनादिविभागं साधुकृत्यां सुकृतं· ननु श्रुत्याद्युक्तमपि प्रारब्धकर्मावस्थानं युक्ति
युक्तं न भवतीति शंकते· नन्विति· अज्ञानस्य तदुपादानभूताया अज्ञानशक्तेः प्रतिबंधकापगमे ज्ञाने नाज्ञाननिवृत्त्या सर्वमुक्तिप्रसंग इति शंकते नन्विति· इन्द्रः॥
परमात्मा मायाभिरविद्याभिः पुरुरूप ईयते बहुरूपः प्रतीयते॰ अस्मिन्पक्षे गौरवमभिप्रेत्य मतांतरमाह अन्ये त्विति· अस्मिन्पक्षे मायाभिरित्यस्य मायाशक्तिभिरित्यर्थः

वे॰प॰ कैः सिद्धांति। तमित्यपेक्षायामाह॰ तदुक्तमिति॰ इदमेवमतं सम्यगिति द्योतनायाहै तच्चेति॰ यस्मादेवं तस्मात् व्यवस्थां बद्धमुक्तव्यवस्थां परिच्छेदार्थं निगमयति॰
टी॰दी॰ तदेवमिति॰ मूलकृत्सूनुना ऽत्यक्तपरित्यक्तं च विस्फुटं व्याख्यातं दूषितं तेन मयेदं च विभूषितं १ गोचारेडनकेडिरेडभिसुतो गोत्रात्मजेडाविलेड्॥ व्याडेडा सुततत्॥
५९ नुः कवीडनुगतद्विट्चण्डभेरुण्डहा ॥ गोरादूक्कुर्द्धियाधिकत्विडमलक्षीरोत्यविभ्राडजः ॥ सस्यादभ्रहृडाभ्रवाडभ्रदरंदेवोद्दढो मेमृडः॥ २॥ स्वजनव॥

यस्य ब्रह्मज्ञानं तस्य ब्रह्मस्वरूपावरणशक्तिविशिष्टाविद्यानाशः न त्वन्यं प्रति ब्रह्मस्वरूपावरणशक्तिविशिष्टाविद्यानाश इत्यभ्युपग
मात् नैकमुक्तौ सर्वमुक्तिः॥ अत एव यावदधिकारमवस्थितिरधिकारिकाणामित्यस्मिन्नधिकरणेऽधिकारिपुरुषाणामुत्पन्नतत्त्वज्ञानाना
मिन्द्रादीनां देहधारणानुपपत्तिमाशंक्याधिकारापादकप्रारब्धकर्मसमाप्त्यनन्तरं विदेहकैवल्यमिति सिद्धांतितम्॰ तदुक्तमाचार्य्यवाचस्पति
मिश्रैः उपासनादिसंसिद्धितोषितेश्वरचोदितं अधिकारं समाप्यैते प्रविशंति परं पदमिति॰ एतच्चैकमुक्तौ सर्वमुक्तिरिति पक्षे नोपपद्यते॰
तस्मादेकाविद्यपक्षेपि प्रतिजीवमावरणभेदोपगमेन व्यवस्थोपपादनीया तदेवं ब्रह्मज्ञानान्मोक्षाख्यानार्थनिवृत्तिर्निरतिशयब्र।
ह्मानंदावाप्तिश्चेति सिद्धम्॰ प्रयोजनम्॰॥ इति श्रीधर्म्मराजदीक्षितविरचितायां वेदान्तपरिभाषायामष्टमपरिच्छेदः समाप्तः शुभं॰

दनचारी पापसंघापहारी स्वजनसदनकारि प्रोल्लसज्ज्योत्रधारी विकचवदनसारी ज्योत्स्निकानंदकारी मदनसुषमकारी सोस्तु मे हृद्विहारी ॥ ३॥ गोत्राग
वसुतारेश मिते संवत्सरे शुभे ॥ फाल्गुने सितसप्तम्यां हर्षे सिद्धा गुरावियम् ॥ ४॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशा राम
॥ ॥ ॥ ॥ वतंसरामकुमारसूनुधनपतिसूरिसुतशिवदत्तकृतायां वेदान्तपरिभाषार्थदीपिकायामष्टमः परिच्छेदः॥ ८॥ समाप्तः श्चायं ग्रंथः॥ ॥ ॥ ५९

